अगर तुम समझते हो प्रैंकीज़ डरावने होते हैं,

# तो अब बड़े-बड़े प्रैंकीज़ के लिए

# तैयार हो जाओ.

ट्विन पैक, बड़ा प्रैंकी !




ऑफ़र केवल
रसना सॉफ्ट ड्रिंक
कॉन्सन्ट्रेट ट्विन पैक पर.
ऑफर स्टॉक रहने तक.

For more Pranky fun visit: www.gogokid.com

Mudra:RASNA:368/CHN/Hin.

# चन्दमामा

सम्पुटः - १८ मे - २००१ सञ्चिका - २



## अन्तरङ्गम्

**कथाः**



**पौराणिकधारावाहिनी**



**चित्रकथामाला**



**ज्ञानप्रदधारावाहिनी**



**ग्रीष्मऋतुविशेषः**



**स्थिरशीर्षिकाः**



## एतस्य अङ्कस्य विशेषाः



दैवसान्निध्यम्
(बेतालकथा)



यक्षपर्वतः

इष्टा वधूः





भारत-गौरव-गाथा

Printed and Published by B. Viswanatha Reddi at B. N. K Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Ltd., No - 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam



BOSS



LAMBADA



PIRANHA



BUZZ




MISSILE



TERMINATOR



LIMBO



SALSA



# Choose your Hero

*Different minds think differently. Go different ways. Make different choices. What better excuse for making so many different bikes?*








*संस्थापकौ -*
चक्रपाणिः नागिरेड्डी च

# अस्माकं दुःखस्य सहभागिनः ते...

यदा गुजरातराज्ये भूकम्पकारणतः असङ्ख्याः जनाः मरणम् अवाप्नुवन् तस्मिन् एव काले देशे इतरत्र गणराज्योत्सवाचरणोत्साहः महान् आसीत् । यदा भूकम्पवार्ता प्राप्ता तदा जनाः यथाशक्ति साहाय्यं विधातुं धावितवन्तः । ये भूकम्पपीडिताः ते सर्वे अस्मद्देशबान्धवाः एव ननु ? अतः जनाः साहाय्ये मतिं कृतवन्तः इत्यत्र किम् आश्चर्यम् ?

एषा अतिविषादकरी घटना अस्मद्देशस्य मित्राणां हृदये अपि अनुकम्पतरङ्गान् उत्पादितवती । अतः ते अपि झटिति साहाय्यदानार्थम् उद्युक्ताः जाताः । अमेरिकाध्यक्षः जार्ज् बुश्वर्यः अवदत् - ''भूकम्पस्य राजनैतिकसीमा न भवति ।'' ब्रिटिश्प्रधानमन्त्री श्री टोनि ब्लेर्वर्यः साहाय्यदानस्य आश्वासनं यच्छन् अवदत् - ''यद्यत् अस्माभिः कर्तुं शक्यते तत्सर्वं करिष्यामः वयम्'' इति । पाकिस्थानीयः प्रमुखनिर्वाहकाधिकारी जनरल् मुशरफ्वर्यः प्रधानमन्त्रिणा सह दूरवाण्या वार्तालापं कुर्वन् अवदत् यत् एतत् दूरवाणीसम्भाषणं देशद्वयस्य मधुरसम्बन्धवर्धने उपकारकं भवेत् इति ।

भारतस्य साहाय्यम् आचरितुम् उद्युक्तानां देशानां नामानि एकैकशः वक्तुम् उद्युक्ताः न वयम् । तथापि टोकियोनगरे कस्मिंश्चित् विद्यालये प्रवृत्ता काचित् घटना अत्र अवश्यम् उल्लेखनीया एव अस्माभिः । इसोनाकाकुचिः षष्ठकक्ष्यायां पठति । द्वादशवर्षीया सा सप्ताहान्त्यविरामानन्तरं भारते प्रवृत्तायाः दुर्घटनायाः वार्तां श्रुतवती । सा तस्याः विंशत्यधिकाः सख्यश्च वित्तकोषे कष्टेन सञ्चितं स्वकीयं धनं शिक्षिकायै दत्त्वा उक्तवत्यः - 'एतत् धनं भारताय प्रेषणीयम्' इति । 'वयं भवतां दुःखस्य सहभागिनः' इत्येषः सन्देशः अपि प्रेषितः आसीत् ताभिः ।

वयं चन्दमामाजनाः अस्मद्वाचकाः सर्वे च काले साहाय्यार्थम् आगतेभ्यः तेभ्यः मित्रेभ्यः हार्दं कृतज्ञताभावं समर्पयामः ।






Welcome to THE KINGDOM of FUN





KISHKINTA is the name of the legendary monkey kingdom in the Indian epic Ramayana, where fun and frolic reigns.

KISHKINTA THEME PARK, 25kms south of Chennai, is India's first themed amusement park. Spread across 120 acres of delightful greenery, gardens and lakes, this fun paradise is a must-visit spot in Chennai

*for all kids from six to sixty !*




India's No.1 Theme Park
Tambaram, Chennai.

Tel: 044 8256880, 8258988, 2367244. e-mail: kishkinta@eth.net
Visit us at www.kishkintaindia.com

A special gift for you along with this May issue of CHANDAMAMA




Name :...............................................
School:...............................................
Res. Address:...............................................
...............................................
...............................................
Date of birth:...............................................



FREE
TICKET TO KISHKINTA
WORTH RS.130/-

*Conditions apply: height below 4' 6"

Cannot be combined with any other offer. Not valid for group bookings One ticket per coupon. Valid upto 31 May 2001

# वार्ता  सञ्चिका

## राष्ट्रियवार्ताः

### गुजराते क्षतिः प्रवासोद्यमस्यापि

जनवरीमासस्य २६ तमे दिनाङ्के जातः भूकम्पः गुजरातराज्ये महतीं हानिम् अजनयत् इति वयं जानीमः एव । स च भूकम्पः प्रवासोद्यमस्यापि हानिकारकः जातः इति श्रूयते । प्रतिवर्षं गुजरातीयाः बहवः अमेरिका-फ्रान्स्प्रभृतिषु देशेषु स्वस्य विरामकालं यापयन्ति स्म । एतस्मिन् वर्षे भूकम्पकारणतः एतादृशप्रवासः महता प्रमाणेन न प्रचलेत् इति तर्क्यते । यात्राव्यवस्थापकाः चिन्तयन्ति यत् एतस्मिन् वर्षे एतत्क्षेत्रे ४०% न्यूनता दृश्येत इति । बहवः परिवाराः एतद्वर्षीयं प्रवासं व्याक्षिप्तवन्तः दृश्यन्ते ।

### केन्द्रीयस्य आयव्ययपत्रस्य गुणावगुणाः



ये विशेषतान्त्रिकाध्ययनार्थं विदेशं गन्तुम् इच्छन्ति तेषु सन्तोषः जनितः अस्ति आयव्ययपत्रकेण । तादृशाः वित्तकोषतः १५ लक्षरूप्यकपरिमितम् ऋणं प्राप्तुम् अर्हन्ति । ये भारते एव तादृशम् अध्ययनं कर्तुम् इच्छन्ति ते सार्धसप्तलक्षरूप्यकमितम् ऋणं प्राप्तुम् अर्हन्ति ।

फेब्रवरीमासस्य २८ तमे दिनाङ्के एतस्य वित्तवर्षीयस्य आयव्ययपत्रकं शासनसभायाम् उपस्थापयता श्रीमता यशवन्तसिन्हवर्येण एतत् उद्घोषितम् ।

आयव्ययपत्रके शर्करामूल्यस्य वृद्धिः घोषिता इत्यतः चाकलेह-बिस्किट्-प्रभृतीनां मधुरखाद्यानां मूल्ये वृद्धिः सम्भाव्यते । अतः बालानां तरुणानां च अप्रियः अंशः अयम् । किन्तु तत्र सन्तोषस्यापि कश्चन अंशः अस्ति । शर्करायुक्तानाम् अपि शीतलपानीयानां मूल्ये न्यूनता कल्पिता । अतः सन्तुष्यन्ति तरुणाः । क्रीडनकपादरक्षादीनां मूल्ये अपि न्यूनता कल्पिता इत्येषा वार्ता बालेषु सन्तोषं जनयेत् ।

ये पत्रमैत्रीप्रियाः सन्ति, ये च पत्रालयद्वारा पुस्तकादीनि प्राप्तुम् इच्छन्ति ते खेदं प्राप्नुयुः पत्रालयमूल्यवृद्धिकारणतः । स्पर्धापत्राणां मूल्यं पञ्चरूप्यकमितं जातं, यच्च रूप्यकचतुष्टयमितम् आसीत् । द्विचक्रोपेतवाहनानां मूल्ये न्यूनता कल्पिता इत्यतः तरुणानां मनसि सन्तोषः उत्पन्नः स्यात् ।

### शब्दाः बाधन्ते सर्वान् अपि !

स्मरणे, पठने, चित्तैकाग्रतायां च किं क्लेशः अस्ति भवताम् ? तर्हि वासपरिसरं सकृत् परिशीलयन्तु । विश्वस्वास्थ्य-संस्थया (WHO) एषु दिनेषु यत् सर्वेक्षणं कृतं ततः ज्ञायते यत् परिसरे श्रूयमाणाः केचन शब्दाः हृदयाघातादीनाम् उत्पादकाः यथा, तथैव नित्यजीवनस्यापि हानिकारकाः भवितुम् अर्हन्ति इति ।



विश्वस्वास्थ्यसंस्था अभिप्रैति यत् ८० डेसिबल्मिताः, ततोऽपि अधिकपरिमाणमिताः वा शब्दाः सामान्यव्यवहारम् अपि प्रदूषयन्ति इति । एतस्मात् जाता हानिः क्वचित् भवेत् तात्कालिकी, क्वचिच्च स्यात् शाश्वतिकी ।

## विदेशीयवार्ताः

### ब्याड्मिण्टन्क्रीडायां सर्वश्रेष्ठः

पौला गोपीचन्दः एषु दिनेषु ब्याड्मिण्टन्क्रीडायां सर्वश्रेष्ठतां प्राप्य एतादृशीम् अर्हतां प्राप्तवत्सु द्वितीयः जातः । बर्मिङ्गुह्याम्नगरे प्रवृत्तायां स्पर्धायां चीनादेशीयं चेन्हाङ्ग्वर्यं पराजित्य सः देशस्य कीर्तिं वर्धितवान् । गोपीचन्दः प्रपञ्चस्तरे इदानीं



दशमं स्थानम् अर्हति । सः उपान्त्यस्पर्धायां डेन्मार्कीयं विश्वश्रेष्ठं पीटर्गडेवर्यं पराजितवान् आसीत् ।

एतादृशीं विश्वश्रेष्ठतां प्राप्तवान् प्रथमः भारतीयः - प्रकाशपडुकोणे । सः एतत् स्थानं प्राप्तवान् १९८० तमे वर्षे । गोपीचन्दस्य विजयवार्तां श्रुत्वा प्रकाशपडुकोणे उक्तवान् - ''गोपीचन्दस्य विजयः प्रमाणीकरोति यत् भारतीयाः अपि विश्वस्तरीयस्पर्धायां भागम् वोढुम् अर्हतावन्तः सन्ति इति । भारतीयब्याड्मिण्टन्क्षेत्रे गोपीचन्दस्य विक्रमः निश्चयेन अस्ति उल्लेखार्हः'' इति ।

### ब्राड्मन्वर्यः अस्तं गतः ।

क्रिकेट्ज्वरः वर्धते खलु एषु दिनेषु ! विपक्षस्य क्रीडापटुं पराजेतुं क्रीडापराः प्रयतन्ते बहुधा । पूर्वं कश्चन आसीत्, यं च क्रीडारतं बाह्यं कर्तुम् अशक्यम् इव एव आसीत् । सः आसीत् डान् ब्राड्मनः । तेन ६९९६ धावनाङ्काः अर्जिताः । तदीयधावनाङ्कपरिमाणम् आसीत् ९९.९४% !! एतावन्तः धावनाङ्काः तेन केवलासु ५२ स्पर्धासु क्रीडता अर्जिताः ।

डोनाल्ड् जार्ज् ब्राडमनः १९०८ तमे वर्षे अगस्ट्मासस्य २७ तमे दिनाङ्के आस्ट्रेलियादेशे नव-सौतवेल्स्प्रदेशे कूटमुन्द्राप्रदेशे जन्म प्राप्तवान् । विद्यार्थि-जीवनकाले एव सः क्रिकेट्क्रीडनम् आरब्धवान् । गाल्फ्क्रीडायाः कन्दुकं जलागारभित्तिं प्रति क्षिप्त्वा तत् प्रत्यागत्य दण्डत्रिकं यथा पातयेत्



तथा करोति स्म सः ।

१९२८ तमे वर्षे ब्रिस्बेन्नगरे सः क्रिकेट्स्पर्धाक्षेत्रे पदार्पणं कृतवान् । ततः निरन्तरप्रगतिः साधिता तेन । सः प्रथमश्रेणीकासु क्रिकेट्स्पर्धासु २८,६०७ धावनाङ्कान् अर्जितवान् । एतेषु ११७ शतकानि अन्तर्भूतानि । ३३८ स्पर्धासु भागं गृहीत्वा एतावन्तः धावनाङ्काः तेन अर्जिताः ।

सः १९४९ तमे वर्षे क्रिकेट्स्पर्धाक्षेत्रात् निवृत्तः जातः ।

### नाशिताः बुद्धप्रतिमाः

अत्युन्नता बुद्धमूर्तिः, बामियन्बुद्धमूर्तिः च एषु दिनेषु नाशिता अफगानिस्थाने तालिबान्नगरे । एताः मूर्तीः नाशयितुं सैनिकाः विविधानि युद्धास्त्राणि उपयुक्तवन्तः ।

तालिबान्प्रदेशे सैन्यशासनं प्रचलति १९९४ तमवर्षात् आरभ्य । सूचना-संस्कृति-मन्त्रालयस्य सचिवः नवलवि कड्रातुल्लाहजमालः घोषितवान् अस्ति यत् देशे स्थिताः इस्लामिकेतराः प्रतिमाः, अतिप्राचीनाः स्युः चेदपि नाशयिष्यन्ते इति ।



पूर्वप्रस्तुते उभे अपि श्रेष्ठप्रतिमे तृतीये चतुर्थे च क्रिस्ताब्दे निर्मिते । 'बामियन्बुद्धः' इति प्रसिद्धा या प्रतिमा अस्ति सा १९६० तमे वर्षे विदेशीयसंस्थाभिः पुनरुज्जीविता आसीत् । अफगानिस्थानीयेन सर्वकारेण परम्परासंरक्षकम् एतत् कृत्यं सानन्दम् अभिनन्दितम् आसीत् अपि ।

एतस्मिन् वर्षे सा एव प्रतिमा नाशिता । अहो विराङ्गतिः !

# वेताल-कथा

## दैवसान्निध्यम्

दृढव्रती त्रिविक्रमः पुनश्च वृक्षे लम्बमानं शवम् अवतार्य स्कन्धे आरोप्य यथापूर्वं श्मशानस्य दिशि प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्, कस्य महाकार्यस्य साधनार्थम् अस्मिन् अर्धरात्रे भवान् भ्रमन् अस्ति इति न अवगच्छामि अहम् । किमर्थम् एतावत् कष्टम् अनुभूयते भवता ? केवलेन परिश्रमेण, सहनया कार्य-करणेन वा लक्ष्यसिद्धिः भविष्यति इत्यत्र कः आधारः ? भवान् भ्रमेण ग्रस्तः इति भाति मम । भवन्तं जागरयितुं रामाचार्यनामकस्य कथां श्रावयामि । मार्गायासपरिहारार्थं तां श्रद्धया शृणोतु'' इति ।

अनन्तरं तेन कथा आरब्धा - चक्रपुर्याः राजा चन्द्रसेनः अस्वस्थः अभवत् । वैद्याः प्रयत्ने कामपि न्यूनतां न



दर्शितवन्तः । तथापि चन्द्रसेनस्य अस्वास्थ्यं न अपगतम् । कदाचित् राज्ञा कश्चन स्वप्नः दृष्टः । स्वप्ने कश्चन दिव्यपुरुषः आगत्य अवदत् – ''भवतः शासनकाले जनाः स्वार्थस्य सीमाम् अतिक्रम्य गच्छन्तः निरङ्कुशाः सन्तः पापानि आचरन्तः सन्ति । कुलस्य, मतस्य, जातेः च नाम्ना जनान् पीडयन्तः सन्ति । जनैः कृतानां पापानां लेपः राज्ञः अपि भवति एव । अतः एव भवान् भयङ्कररोगेण ग्रस्तः अभवत् । एतस्य चिकित्साकरणं न तावत् सुकरम्'' इति ।

चन्द्रसेनः तं दिव्यपुरुषं प्रणम्य पृष्टवान् – ''अहं मम दोषान् परिष्करोमि । किन्तु ततः पूर्वं मया एतस्मात् रोगात् मुक्तिः प्राप्तव्या खलु ? अतः कृपया भवान् एव तदर्थम् कमपि उपायं सूचयतु'' इति ।

''त्रीणि तुलसीपर्णानि भवान् चर्वतु । ततः भवता रोगात् मुक्तिः प्राप्यते । किन्तु यः भवतः मुखे त्रीणि तुलसीपर्णानि स्थापयति तेन दश वर्षाणि यावत् दैवसान्निध्यम् अपरित्यज्य पवित्रहृदयेन भगवतः पूजा कृता स्यात्'' इति उक्त्वा दिव्यपुरुषः अदृश्यः अभवत् ।

उषसि एव उत्थाय चन्द्रसेनः सचिवान् आहूय स्वप्नवृत्तान्तं कथितवान् । अतः ते सर्वे महाराजस्य रोगं दूरीकर्तुं समर्थस्य जनस्य अन्वेषणे मग्नाः अभवन् ।

सीतापुरनामके ग्रामे सुप्रसिद्धम् एकं राममन्दिरम् आसीत् । तस्य मन्दिरस्य अर्चकः रामाचार्यः महाविष्णुभक्तः आसीत् । द्वादशवर्षेभ्यः पूर्वं सः केनचित् पण्डितेन सह वादविवादं कृतवान् आसीत् । सः पण्डितः वदति स्म यत् अहं दूरस्थं प्रान्तं गत्वा ज्वालामालिनामकस्य भगवतः आराधनं कृतवान् इति । 'तादृशदेवस्य नाम्नः उल्लेखः पुराणेषु कुत्रापि न दृश्यते' इति रामाचार्यस्य वादः । तस्य पण्डितस्य कथनम् आसीत् यत् ज्वालामाली शिवकेशवाभ्याम् अपि श्रेष्ठः महान् च इति । रामाचार्यः तस्य पण्डितस्य वादं न अङ्गीकृतवान् । ततः तयोः महती चर्चा प्रवृत्ता । किन्तु ततः प्रयोजनं किमपि न सिद्धम् । अन्ते श्रान्तः रामाचार्यः – ''भवता सह चर्चया कोऽपि लाभः नास्ति । भवादृशस्य स्पर्शः अपि पापकरः'' इति उक्त्वा ततः प्रस्थितवान् । तदा रामाचार्यस्य हस्तं गृहीत्वा स्थगयन् सः पण्डितः – ''ज्वालामालिनः भक्तं मां पापिनं वदति खलु

भवान् ? एवं तर्हि भवन्तं स्पृष्ट्वा भवन्तम् अपि पापिनं करिष्यामि । यावत् भवान् ज्वालामालिनि न विश्वसिति तावत् एतत् पापं भवन्तं न त्यक्ष्यति । भवान् पापलिप्तः एव स्थास्यति'' इति अवदत् ।

रामाचार्यः स्वस्य हस्तं मोचयित्वा साक्षात् राममन्दिरं गत्वा रामम् उद्दिश्य - ''प्रभो, श्रीरामचन्द्र, कश्चित् पापी मां स्पृष्टवान् । अहं पापमुक्तः इति भवता एव प्रमाणी-कर्तव्यम् । तदा एव अहम् इतः निर्गमिष्यामि । नो चेत् इतः सर्वथा मम गमनं न भविष्यति'' इति उक्तवान् ।

तद्दिनतः रामाचार्यः मन्दिरे एव वासम् आरब्धवान् । तस्य पत्नीपुत्रादयः साष्टाङ्ग-प्रणामपूर्वकं निवेदितवन्तः - गृहम् आगच्छतु इति । किन्तु रामाचार्यः गृहं गन्तुं सिद्धः न अभवत् । एवं द्वादश वर्षाणि अतीतानि । जनाः तं महाभक्तं भावयन्ति स्म । न केवलं श्रीरामस्य, अपि तु तस्य दर्शनार्थम् अपि जनाः मन्दिरम् आगच्छन्ति स्म ।

चन्द्रसेनस्य सचिवाः रामाचार्यस्य विषयं श्रुत्वा राजधानीं प्रति आगन्तुं रामचार्याय वार्ता प्रेषितवन्तः । नेतुम् आगतान् दूतान् उद्दिश्य स्पष्टरूपेण - ''अहं प्रतिज्ञाबद्धः अस्मि । राममन्दिरं परित्यज्य कुत्रापि न गच्छामि'' इति अवदत् रामाचार्यः ।

तदा सचिवेषु अन्यतमः रामाचार्यम् अवदत् - ''महाराजसमीपं यदि आगमिष्यति तर्हि एकलक्षसुवर्णनाणकानि प्राप्यन्ते'' इति । सः सचिवः एतदपि ज्ञापितवान् यत् - 'यदि भवान् न आगमिष्यति तर्हि कठोरं दण्डनम्



अनुभोक्तव्यं स्यात्' इति । रामाचार्यः स्वस्य निर्णयविषये अचलः आसीत् । अतः सः सचिवस्य वचनं निराकृतवान् । 'रामः रक्षति' इति तस्य विश्वासः आसीत् ।

रामाचार्यस्य भक्त्या प्रभावितः सः सचिवः - ''स्वामिन्, भवान् प्रमाणस्य प्रतीक्षायाम् अस्ति खलु ? महाराजः स्वस्थः यदि भविष्यति तर्हि तेनैव प्रमाणितं भविष्यति खलु भवान् पापभाक् न इति ? ज्वाला-मालिनः शिष्यस्य स्पर्शेन जातात् पापलेपात् भवान् विमुक्तः भविष्यति । भवतः निर्दोषित्वम् अपि प्रमाणितं भविष्यति । महाराजः अपि रोगमुक्तः भविष्यति । एका क्रिया बह्वर्थसाधिका स्यात्'' इति अवदत् ।

रामाचार्यः नकारपूर्वकं शिरः चालयन् अवदत् - ''चन्द्रसेनमहाराजस्य पिता उग्रसेन-



महाराजः प्रतिवर्षम् एतत् मन्दिरम् आगत्य भगवतः रामचन्द्रस्य दर्शनं करोति स्म । चन्द्रसेनमहाराजः तु एकवारम् अपि अत्र न आगतवान् । अतः एव श्रीरामचन्द्रः तम् अत्र आह्वयन् अस्ति । यावत् मम निर्दोषित्वं प्रमाणितं न भविष्यति तावत् अहम् एतत् मन्दिरं परित्यज्य अन्यत्र न गमिष्यामि । महाराजम् एव अत्र आनयन्तु'' इति ।

सचिवः राजधानीं गत्वा प्रवृत्तं सर्वं महाराजं विवृतवान् । सर्वं श्रुत्वा महाराजः आनन्देन अवदत् - ''रामाचार्यः महान् भक्तः अस्ति । तादृशस्य महात्मनः दर्शनेन एव मम समस्तपापानि क्षालितानि भवेयुः । मम स्वप्नस्य साकारतादिनं सन्निहितम् अस्ति इति भाति । मां सीतापुरस्य राममन्दिरं प्रति प्रापणस्य व्यवस्थां कुर्वन्तु'' इति असूचयत् ।

अनुक्षणं महाराजं सीतापुरं प्रति नेतुं व्यवस्था कृता । मणिभिः अलङ्कृतायां शिबिकायां महाराजः शायितः । महाराजस्य कष्टं न भवेत् इति धिया शिबिकावाहकाः सावधानतया मन्दगत्या चलन्तः आसन् । शिबिकायाः अग्रे सैनिकाः आसन् । पृष्ठतः परिवारजनाः आसन् ।

शिबिका सीतापुरस्य सीमां प्राविशत् । तदा वायुः वेगेन वाति स्म । यदा वायोः वेगः अधिकः अभवत् तदा रक्षणार्थं शिबिकावाहकाः एकस्य वृक्षस्य अधः शिबिकाम् अवतारितवन्तः । सैनिकाः, परिवारजनाः च शिबिकां परितः स्थितवन्तः ।

तदा कश्चित् योगी तत्र आगतवान् । राज्ञः समीपं गत्वा सः अपृच्छत् - ''पुत्र, भवतः गमनं कुत्र ?'' इति ।

शयानः राजा उपवेष्टुं प्रयत्नं कृतवान् । योगी तस्य प्रयत्नं निवारितवान् । शयानः एव राजा स्वस्य वृत्तान्तं श्रावितवान् ।

पूर्णं विवरणं श्रुत्वा योगी अवदत् - ''मम समीपे तादृशानि तुलसीपर्णानि सन्ति, यानि सर्वान् व्याधीन् निवारयितुं शक्नुयुः । त्रीणि पर्णानि यदि खाद्येरन् तर्हि भवान् रोगमुक्तः भवेत्'' इति ।

तदा राजा - ''योगिवर, मम रोगः अत्यन्तं विचित्रः अस्ति । दश वर्षाणि यावत् यः निरन्तरं मन्दिरे वसन् अस्ति तादृशः मम रोगं निवारयितुं शक्नोति । किं भवान् तादृशः ?'' इति विनयपूर्वकं पृष्टवान् ।

तदा योगी हसन् अवदत् - ''अहं तु नित्यसञ्चारी अस्मि'' इति ।

अनुक्षणं चन्द्रसेनः अवदत् – ''अहं रामाचार्यात् एव तुलसीपर्णानि स्वीकरिष्यामि'' इति ।

तदा योगी – ''पुत्र, भवान् ज्ञानी अस्ति । भवति निहितं ज्ञानमेव स्वप्नरूपेण प्रकटितम् अभवत् । तथापि किञ्चित् अज्ञानं भवति अवशिष्टम् अस्ति । अतः भवान् रामाचार्यसमीपं गन्तुम् इच्छन् अस्ति । तत्र गमनेन भवतः कोऽपि लाभः न भविष्यति । भवान् इतः एव प्रतिगच्छति चेत् वरम् । मया दीयमानानि तुलसीपर्णानि खादित्वा स्वस्थः भवतु '' इति अवदत् ।

सचिवः द्वयोः वार्तालापं श्रुतवान् आसीत् । सः अग्रे आगत्य चन्द्रसेनमहाराजम् उद्दिश्य – ''महाराज, एषः योगी तु 'अहं नित्यसञ्चारी' इति स्वयमेव वदन् अस्ति । तेनैव सिद्धं यत् एषः कस्मिंश्चिदपि मन्दिरे दश निमेषान् यावत् अपि न स्थितवान् इति । 'रामाचार्यस्य समीपे गमनेन लाभः नास्ति' इत्यपि वदति एषः । भगवान् श्रीरामचन्द्रः एव परीक्षां कर्तुम् एतं भवतः समीपे प्रेषितवान् इति भाति मम । नो चेत् एषः कोऽपि शत्रोः गुप्तचरः स्यात् । भवान् स्वस्थः मा भवतु इति इच्छया अत्र आगतवान् स्यात् । कथञ्चित् वयम् एतावद्दूरम् आगताः स्मः एव । रामाचार्यस्य समीपे अगत्वा प्रतिगमनं सर्वथा अनुचितम्'' इति अवदत् ।

चन्द्रसेन क्षणं यावत् विचिन्त्य योगिनम् उद्दिश्य – ''स्वामिन्, भवतः वचनैः मयि ज्ञानस्य जागरणं जातम् अस्ति । किन्तु केचन सप्रमाणं दृष्टे विषये एव विश्वासं कुर्वन्ति ।



अतः अहं रामाचार्यस्य समीपं गत्वा आगमिष्यामि । तावत् भवान् अत्र स्थातुं शक्नुयात् किम् ?'' इति पृष्टवान् ।

योगी तत्र स्थातुं स्वस्य सम्मतिं दर्शितवान् । किञ्चित्कालानन्तरं पुनश्च वायोः वेगः अधिकः अभवत् । चन्द्रसेनः राममन्दिरं गतवान् । रामाचार्येण दत्तानि त्रीणि तुलसीपर्णानि खादितवान् । किन्तु तेन कोऽपि प्रभावः न अभवत् । निराशं खिन्नं च रामाचार्यम् उद्दिश्य राजा अवदत् – ''मया सह योगिनः दर्शनार्थम् आगच्छतु'' इति ।

चन्द्रसेनः, तस्य परिवारजनाः, रामाचार्यः च सम्भूय योगिनः समीपम् आगताः । योगिना दत्तानि पर्णानि खादित्वा राजा अनुक्षणं स्वस्थः अभवत् । तस्य शरीरस्य सर्वेऽपि अवयवाः कार्यारम्भं कृतवन्तः । शिबिकातः

अवतीर्य महता उत्साहेन इतस्ततः अटनं कृतवान् राजा । अनन्तरं सः योगिनः अनुज्ञां प्राप्य सपरिवारं राजधानीं प्रतिगतवान् । खिन्नः निराशः च रामाचार्यः मन्दिरस्य दिशि अगत्वा साक्षात् गृहं गतवान् ।

एवं कथां श्रावयित्वा वेतालः अवदत् - "रामाचार्यः द्वादश वर्षाणि यावत् गृहं न गतवान् । पत्नीपुत्रादिभिः सह अपि न स्थितवान् । तादृशेन महाभक्तेन दत्तैः पर्णैः महाराजस्य रोगनिवारणं न अभवत् । किम् एतत् विचित्रम् इति न भाति ? अन्ते रामाचार्यः मन्दिरम् अगत्वा किमर्थं साक्षात् स्वगृहं गतवान् ? भगवति तस्य विश्वासः तु नष्टः न स्यात् खलु ? तस्य योगिनः विषये अपि किञ्चित् चिन्तयाम । सः दश निमेषान् यावत् अपि मन्दिरे न तिष्ठति । तादृश्या व्यक्त्या दत्तैः तुलसीपर्णैः राज्ञः रोगः अपगतः । किम् एतत् विचित्रम् इति न भाति ? कथम् एतत् साध्यं जातम् ? मम एतेषां सन्देहानां परिहारं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा राजा त्रिविक्रमः अवदत् - "देवस्य विषये, दैवसान्निध्यस्य विषये च यदि चिन्तयामः तर्हि ज्ञायते यत् रामाचार्यस्य योगिनः च विचारः मार्गः च भिन्नौ स्तः इति । रामाचार्यः दुरहङ्कारी । यतः तस्य विश्वासः आसीत् यत् भगवान् मन्दिरे एव वसति इति । अतः एव दूरप्रान्तात् आगतं पण्डितं सः पापिनं भावितवान् । ज्वालामालिनं च भगवन्तं भावयितुं निराकृतवान् । तस्य पण्डितस्य स्पर्शोऽपि पापकरः इति तस्य भावना आसीत् । किन्तु यदा तेन दत्तानि पर्णानि महाराजे कमपि परिणामं न अजनयन् तदा तेन विवेकः प्राप्तः । मन्दिरे उपवेशनमात्रेण दैवसान्निध्यं न लभ्यते इति तेन अवगतम् । अतः एव सः मन्दिरम् अगत्वा स्वगृहं गतवान् । योगिनः विषयः अपि एवम् एव । सः नित्यसञ्चारी सन् जगति परिभ्रमणं करोति स्म । यतः तस्य दृष्ट्या जगत् एव एकं मन्दिरम् । प्रत्येकस्मिन् देवत्वं पश्यति स्म सः । तादृशेन पण्यपुरुषेण दत्तैः पर्णैः चन्द्रसेनमहाराजस्य रोगः अपगतः" इति ।

एवं राज्ञः मौनभङ्गकरणे सफलः वेतालः पुनश्च शवसहितः अदृश्यः भूत्वा वृक्षस्य उपरि उपविष्टवान् ।





# यक्षपर्वतः

## ३

*[गण्डकजातीयैः सह गत्वा खड्गवर्मा जीवदत्तः च नदीतीरे वासं कल्पितवतः आक्रामकान् दृष्टवन्तौ । मध्यरात्रे तौ यावत् आक्रमणं चिन्तयन्तौ आस्तां तावता समीपस्थपर्वतस्य गुहायां कश्चन मान्त्रिकः ताभ्यां दृष्टः । मान्त्रिकेण प्रेरिता विकृताकारा काचन राक्षसी उच्चैः आक्रोशनं कृतवती । गर्जन्ती सा आक्रामकाणां समीपं गन्तुम् उद्युक्ता जाता । तदनन्तरम्...]*

अग्नेः पुरतः उपविश्य शैत्यं निवारयन् आक्रामकनायकः अनुचरैः सह वार्तालापं कुर्वन् आसीत् । गुहातः आगत्य कोलाहलं कुर्वत्याः राक्षस्याः दिशि सः दृष्टिं प्रसारितवान् । सा च राक्षसी तस्य समीपम् एव आगच्छन्ती आसीत् । तस्याः हस्ते ज्वलन् दीपदण्डः अपि आसीत् ।

''एषः कीदृशः विलक्षणः आकारः !! एषा राक्षसी; उत पर्वतीयपिशाची ?'' इति वदन् आक्रामकनायकः उत्थितवान् ।

''नायकवर्य ! एषा राक्षसी अस्मान् खादितुम् आगच्छन्ती स्यात् इति भाति । अस्माभिः इदानीम् आत्मरक्षणोपायः चिन्तनीयः'' इति वदन्तः चत्वारः अनुचराः नदीं प्रति धावितवन्तः ।

''भो भोः, किं पलायनेन ? एतां वयं शूलायुधेन मारयाम'' इति उच्चैः अवदत् आक्रामकनायकः ।

किन्तु अनुयायिनः तस्य वचनं न श्रुतवन्तः एव । केचन वृक्षसमूहं प्रति, पुनः केचन नदीं प्रति च धावितवन्तः । अत्रान्तरे राक्षसी शयितान् भटान् प्रहर्तुम् उद्युक्ता अभवत् ।



बद्धं स्वर्णाचार्यं बन्धविमुक्तं करवाम'' इति उक्तवान् खड्गवर्मा ।

राक्षस्या क्रियमाणानि दुष्कृत्यानि पश्यन् एव उक्तवान् जीवदत्तः - ''स च आक्रामक-नायकः धैर्यवान् अस्ति इति भाति । तेन सह केचन धैर्यवन्तः अनुयायिनः अपि दृश्यन्ते । यदाकदाचिदपि ते प्रत्याक्रमणं कृत्वा राक्षसीं सम्मुखीकर्तुम् अर्हन्ति'' इति ।

''जीवदत्त ! भीत्या धावताम् उष्ट्राणां पादाघातेन स्वर्णाचार्यः आघातितः तु न भवेत् खलु ?'' इति आशङ्कां प्रकटितवान् खड्गवर्मा ।

अत्रान्तरे गुहायां स्थितस्य मान्त्रिकस्य समीपे अग्निज्वाला दृष्टा । मान्त्रिकः तैलेन आर्द्रान् वस्त्रावृतान् दीपदण्डान् प्रज्वाल्य - ''जय शाम्भवि ! जय भैरवि !'' इति वदन् आक्रामकान् उद्दिश्य क्षिप्तवान् ।

एतत् नूतनम् आक्रमणं दृष्ट्वा आश्चर्य-चकितः भीतः च आक्रामकनायकः आज्ञापितवान् - ''भोः उष्ट्रवीराः । एषा विकृताकारा पिशाची न एकाकिनी । उपरि गुहायाम् एतस्याः सहायकाः अपि सन्ति इति भाति । अतः सर्वे नदीप्रवेशार्थं सिद्धाः भवन्तु । सर्वाः गोणीः नद्यां पातयन्तु । प्लवमानाः ताः अस्माभिः सहैव आग-मिष्यन्ति । क्वचित् वयं ताः प्रतिसङ्गृह्णीयाम'' इति ।

गुहास्थः मान्त्रिकः हस्तस्थं दीपदण्डम् इतस्ततः चालयन् उच्चैः अवदत् - ''अये जटामयि पिशाचि ! एतावता अपि भवत्या एते वराकाः यमलोकं प्रति किं न प्रेषिताः ?

तेषां वस्त्रेषु अग्निस्पर्शं कृत्वा सा तत्र घोरं दृश्यम् उत्पादितवती ।

वृक्षस्य उपरि उपविष्टौ जीवदत्त-खड्ग-वर्माणौ एतत्सर्वं पश्यन्तौ आस्ताम् । राक्षस्याः क्रूरं कृत्यं दृष्ट्वा तौ दिग्भ्रान्तौ । वृक्षस्य अधः स्थिताः चत्वारः गण्डकजातीयाः तु भयेन कम्पन्ते स्म ।

''खड्गवर्मन् ! एषा विकृताकारा न राक्षसी, न वा पिशाची । मान्त्रिकः काञ्चित् मन्त्र-शक्त्या वशीकृत्य एतेन रूपेण अत्र प्रेषितवान् स्यात् इति भाति मम'' इति खड्गवर्माणम् उक्तवान् जीवदत्तः ।

''वस्तुस्थितिः याकाचित् स्यान्नाम । वस्तुतः वयं यत् कार्यं कर्तुम् इष्टवन्तः तदेव कार्यं कुर्वती अस्ति एषा विकृताकारा । यदा एते दुष्टाः ततः पलायन्ते तदा वयं गोण्यां



धान्यादिगोणीः नद्यां क्षिपतः तान् जनान् आदौ गृहीत्वा नदीदेव्यै बलिरूपेण अर्पयतु तावत्'' इति ।

मान्त्रिकस्य आदेशं श्रुत्वा राक्षसी धान्यगोणीः स्कन्धे आरोप्य नदीं प्रति धावतः आक्रामकान् गृहीत्वा नद्यां क्षेप्तुम् उद्युक्ता अभवत् ।

अत्रान्तरे कश्चन स्वरः श्रुतः - ''रक्षन्तु माम् । रक्षन्तु माम् । नद्यां मा क्षिपन्तु...'' इति । एषः स्वरः आसीत् स्वर्णाचार्यस्य । एतत् श्रुत्वा अपि आक्रामकाः स्वर्णाचार्ययुक्तां गोणीं नद्यां क्षिप्तवन्तः एव ।

''खड्गवर्मन् ! स च स्वरः श्रुतः खलु भवता ? सः स्वर्णाचार्यस्य एव । धान्यगोणी नद्यां निमज्जिता तु न भवति । अतः स्वर्णाचार्ययुक्ता सा गोणी प्लवमाना तीरं प्राप्नुयात् एव । अतः अहं गण्डकजातीयं कञ्चित् आदिशामि यत् गोणीम् अनुसृप्य अनुतीरं गत्वा स्वर्णाचार्ययुक्तां गोणीं गृह्णातु इति'' इति उक्तवान् जीवदत्तः ।

''गण्डकजातीयान् यत् भवान् वक्तुम् इच्छति तत् उक्त्वा अत्र आगच्छतु । अहम् अत्रैव स्थास्यामि'' इति वदन् खड्गवर्मा धनुः बाणान् च हस्तेन गृहीतवान् ।

राक्षसीतः भीतिं प्राप्य पलायमानान् अनुचरान् उद्दिश्य आक्रामकनायकः - ''नदीतीरे एव भवन्तः धावन्तु । महता श्रमेण वा ताः गोण्यः अस्माभिः प्राप्तव्याः एव'' इति उक्त्वा स्वयमपि वेगेन धावनम् आरब्धवान् ।

''मया विलम्बम् आचरता अनुचितं कृतम् । एषः दुष्टः इतः पलायमानः अस्ति'' इति स्वगतं वदन् खड्गवर्मा लुण्ठाकनायकम् लक्ष्यीकृत्य बाणान् प्रयुक्तवान् । किन्तु तावता लुण्ठाकनायकः बहुदूरं धावितवान् आसीत् । अतः खड्गवर्मणः बाणप्रयोगाः अकिञ्चित्कराः जाताः ।

अल्पे एव काले स च परिसरः शान्तः जातः, वृष्टेः समाप्तेः अनन्तरम् इव..। ततः मान्त्रिकः गुहातः बहिः आगत्य दीपदण्डम् इतस्ततः चालयन् परितः पश्यन् उच्चस्वरेण अवदत् - ''अये राक्षसि ! कुत्र गता भवती ? किं लक्षितं कार्यं किमपि सिद्धम् ? किं तत्रत्याः काश्चन वा धान्यगोण्यः प्राप्ताः भवत्या ?'' इति ।

राक्षसी भारयुक्तानि पदानि निक्षिपन्ती एव गुहासमीपं गन्तुं यावत् उद्युक्ता तावता तया



गण्डकजातीयाः दृष्टाः । सा उच्चस्वरेण मान्त्रिकम् अवदत् - "अहो, यमकिङ्कराः केचन एकशृङ्गयुक्तं महिषम् आरुह्य शूलं गृहीत्वा आगच्छन्तः दृश्यन्ते !" इति ।

राक्षस्याः कथनं श्रुत्वा मान्त्रिकः किञ्चित् अग्रे आगत्य दीपदण्डस्य प्रकाशस्य साहाय्येन गण्डकमृगान्, तान् आरुह्य आगतान् गण्डकजातीयान् च दृष्टवान् । ततः सः उच्चस्वरेण उक्तवान् - "अये मूर्खे राक्षसि ! न एते यमकिङ्कराः । न वा ते एकशृङ्गयुक्ताः महिषाः । ते च सन्ति गण्डकजातीयाः सामान्याः अरण्यवासिनः। तेषां वाहनानि च गण्डकमृगाः । आदौ भवती गण्डकजातीयान् खादतु । ततः तान् मृगान् मारयित्वा खादितुम् अर्हति" इति ।

खड्गवर्मा जीवदत्तः च ज्ञातवन्तौ यत् अचिरात् एव गण्डकजातीयाः अपायं सम्मुखीकरिष्यन्ति इति । अतः खड्गवर्मा राक्षसीं लक्ष्यीकृत्य एकं बाणं प्रयुक्तवान् । राक्षस्याः शरीरे रोमाणि जटाकारतां गतानि आसन् । अतः बाणप्रहारतः अपि राक्षस्या काऽपि पीडा न प्राप्ता ।

"गुरुवर्य ! मां कोऽपि बाणैः दूरात् प्रहरन् अस्ति" इति उच्चैः अवदत् राक्षसी ।

तावता धावन्तौ आगच्छन्तौ खड्गवर्म-जीवदत्तौ मान्त्रिकेण दृष्टौ । सः राक्षसीम् उद्दिश्य - "बाणप्रयोक्ता कश्चन क्षत्रियः इव दृश्यते । तेन सह यः अस्ति सः मन्त्रविद्यां जानन् पुरुषः इव दृश्यते । मम मन्त्रदण्डम् अभिमन्त्र्य क्षिप्त्वा एतौ अहम् इदानीम् एव भस्मसात् करिष्यामि" इति उक्त्वा गुहां प्रविष्टवान् ।

गुहाद्वारदेशं पश्यन् खड्गवर्मा जीवदत्तम् अवदत् - " जीवदत्त ! भवतः वेषः मान्त्रिके भयम् अजनयत् इति भाति । भवान् मन्त्रविद्यादिकं जानाति इति सः भावितवान् । अतः एव गुहायाः अन्तः गतवान् । इदानीम् आवां किं करवाव ?" इति ।

"किम् अन्यत् करणीयम् इदानीम् ? विकृताकारायाः राक्षस्याः, तस्य मान्त्रिकस्य च मूलम् उत्पाटनीयम् । एवं ननु ?" इति अवदत् जीवदत्तः ।

"एवं तर्हि कुतो विलम्बः ? गुहां प्रविशाव तावत्" इति वदन् खड्गवर्मा ततः प्रस्थित-वान् ।

अग्रे गमनात् पूर्वं तौ सकृत् परितः दृष्टिं प्रसारितवन्तौ ।

गण्डकजातीयाः त्रयः अपि राक्षसीं शूलैः वेधयितुं प्रयत्नं कुर्वन्तः आसन् । राक्षसी तु 'गुरुवर्य ! गुरुदेव !' इति वदन्ती गुहां प्रति धावितवती ।

गण्डकजातीयः कश्चन भटः गण्डकमृगात् अवतीर्य जीवदत्तसमीपम् आगत्य अवदत् - "श्रीमन् ! अस्माकं प्रयत्नाः विफलाः । यदि उत्तमः उपायः स्यात् तर्हि वयं तां राक्षसीं गृहीतवन्तः स्याम । अस्माकं शूलप्रयोगः कमपि परिणामं न अजनयत् । यतः तस्याः रोमाणि जटाकारतां प्राप्य अयःकवचायन्ते" इति ।

"एवं तर्हि रज्जुसाहाय्येन सा ग्रहीतव्या भवेत् । इदानीं भवन्तः अत्रैव तिष्ठन्तु । आवां गुहां प्रविश्य तां राक्षसीं, तं मान्त्रिकं च ग्रहीष्यावः" इति अवदत् जीवदत्तः ।

जीवदत्तः खड्गवर्मा च शिलाः आरोहन्तौ गुहायाः द्वारस्य समीपं गतवन्तौ । तावता राक्षसी वेगेन आगत्य गुहां प्रविष्टवती आसीत् ।

सा अन्तः गत्वा मान्त्रिकम् अवदत् - "गुरुवर्य ! एकशृङ्गिणां महिषाणां स्वामिनः यमकिङ्कराः ये सन्ति तेषां साहाय्यं कर्तुम् उभौ मानवौ आगतौ स्तः । तौ इतः एव आगच्छन्तौ स्तः । शीघ्रातिशीघ्रं तौ, अन्यान् च भस्मसात् करोतु कृपया" इति ।

ततः किञ्चित्कालस्य अनन्तरं खड्गवर्मा जीवदत्तः च गुहां प्रविष्टवन्तौ । तत्र न आसीत् मान्त्रिकः, न वा राक्षसी । "जीवदत्त ! किम् तौ मायाशक्तियुक्तौ अपि स्तः ?" इति आश्चर्येण पृष्टवान् खड्गवर्मा ।



"यदि तादृशी शक्तिः तयोः स्यात् तर्हि तौ किमर्थं वा आक्रामकाणां वस्तूनाम् अपहरणार्थं प्रयत्नं कृतवन्तौ स्याताम् ?" इति उक्तवान् जीवदत्तः । अत्रान्तरे ताभ्याम् अवलोकितं यत् चतुरस्राकारः कश्चन शिलाखण्डः किञ्चिदिव प्रचालितः अस्ति इति । तौ स्वस्य पूर्णशक्त्या तं ततः अपसारितवन्तौ । तत्र ताभ्याम् एकं छिद्रं दृष्टम् । खड्गवर्मा जीवदत्तः च छिद्रस्य अन्तः दृष्टिं प्रसारितवन्तौ । किन्तु ताभ्यां तत्र किमपि न दृष्टम् । तत्र कोऽपि नास्ति इति तु स्पष्टम् आसीत् ।

"जीवदत्त ! तौ उभौ अपि वराकौ महता चातुर्येण इतः पलायितौ स्तः । आवां मूर्खौ कृतवन्तौ तौ । इतः ताभ्यां पलायितम् इत्यतः स्पष्टं यत् अत्र कुत्रापि कोऽपि सुरङ्गमार्गः



स्यात् इति'' इति उक्तवान् खड्गवर्मा ।

''इदानीं किं करवाम ? प्रातःकालः आसन्नः अस्ति खलु ?'' इति वदन् जीवदत्तः गुहायां स्थितम् एकं दीपदण्डं स्वीकृत्य छिद्रात् बहिः क्षिप्तवान् । तस्य प्रकाशे तेन कश्चन सुरङ्गमार्गः अभिज्ञातः ।

खड्गवर्मा जीवदत्तः च तं सुरङ्गमार्गं प्रविष्टवन्तौ । तत्र ताभ्याम् अन्यत् किमपि न दृष्टम्, ऋते शिलाखण्डेभ्यः । खड्गवर्मा कोषात् खड्गम् आकृष्य समीपस्थं दीपदण्डम् अपरहस्तेन गृहीत्वा जागरूकतया सर्वत्र पश्यन् अग्रे प्रस्थितवान् । जीवदत्तः मन्त्रदण्डेन उभयपार्श्वस्थां भित्तिं तत्र तत्र ताडयन् - 'किमपि रहस्यं ज्ञायेत किम्?' इति परिशीलयन् खड्गवर्माणम् अनुसृतवान् ।

एतेन क्रमेण तौ किञ्चित्कालं तेनैव सुरङ्गमार्गेण अग्रे गतवन्तौ । अन्ते ताभ्यां मुखद्वारं प्राप्तम् । ततः अग्रे कश्चन विशालः प्रदेशः ताभ्यां दृष्टः । तत्र शिथिलानि बहूनि भवनानि आसन् । एकं शिथिलं गोपुराकारकं भवनम् अपि तत्र आसीत् ।

एतानि शिथिलभवनानि आश्चर्येण पश्यन् जीवदत्तः अवदत् -''खड्गवर्मन् ! सूर्योदयः उपस्थितः इव । सुरङ्गमार्गेण गच्छन्तौ आवां एतत् शिथिलनगरं प्राप्तवन्तौ यत् तत् तु आश्चर्याय'' इति ।

''अत्र सर्वं शिथिलम् अस्ति । वासार्थम् अयोग्यानि जीर्णभवनानि दृश्यन्ते अत्र । नान्यत् किमपि'' इति निराशः सन् उक्तवान् खड्गवर्मा ।

''प्रायः अयं भागः पूर्वं कदाचित् कस्यचित् नगरस्य प्रधानभागः आसीत् इति मन्ये । बिले सर्पः इव तौ राक्षसी-मान्त्रिकौ अत्रैव क्वचित् रहसि स्थितवन्तौ अपि स्याताम् । कथञ्चित् तौ अत्र अन्वेष्टव्यौ'' इति उक्तवान् जीवदत्तः ।

यथा ताभ्यां चिन्तितं तथा कस्मिंश्चित् बिले न आस्तां राक्षसी मान्त्रिकः च, प्रत्युत तस्यैव शिथिलनगरस्य अधः स्थिते मण्डपे उन्नतासनस्य उपरि उपविष्टायाः उपासिकायाः पुरतः जानुसाहाय्येन उपविष्टौ आस्ताम् । ताम् उपासिकाम् उभयतः भयङ्कराकारौ खड्गधारिणौ सैनिकौ स्थितौ आस्ताम् ।

उपासिकायाः नेत्रे अग्निं वर्षतः स्म इव । सा दन्तैः शब्दम् उत्पादयन्ती उक्तवती - ''अधममान्त्रिक ! मूर्खराक्षसि ! उत्थीयतां तावत् । भवतोः मूर्खतायाः कारणतः एतस्य

पवित्रनगरस्य रहस्यस्थितिः मानवैः ज्ञाता अभवत्'' इति ।

''महादेवि ! यदि भवत्याः आज्ञा स्यात् तर्हि अहं तौ बन्दीकृत्य महाभूताय बलिरूपेण अर्पयिष्यामि'' इति कम्पमानेन स्वरेण उक्तवान् मान्त्रिकः ।

उपासिका विकटाट्टहासं प्रकटयन्ती उक्तवती – ''मुखपर्यन्तम् आहारः नीतः चेदेव खादितुं शक्नोति एषा राक्षसी । भवान् अपि तादृशः एव । महाभूतस्य दयया एव अस्माकं प्रयत्नं विनैव तौ मानवौ एतं प्रदेशं प्राप्तवन्तौ स्तः । तौ कुतः किमर्थम् आगतौ इति अज्ञात्वा तयोः बलीकरणम् अपायकरम्'' इति ।

''यथाज्ञापयति देवी । सर्वम् अवगतं भगवति !'' इति उक्तवन्तः तत्रत्याः सर्वे ।

उपासिका सर्वान् तीक्ष्णदृष्ट्या सकृत् दृष्ट्वा उक्तवती – ''अहं यत् वदन्ती अस्मि तत् सावधानतया शृण्वन्तु तावत् । मूर्खाः ! आदौ तौ तरुणौ ग्रहीतव्यौ । किन्तु तयोः अल्पा अपि हानिः न स्यात् । तौ मत्समीपम् आनेतव्यौ । सूर्योदयः जातः अस्ति । एतस्मिन् नगरे किम् अस्ति इति तौ द्रष्टुं गतौ स्याताम् । भवन्तः रहसि तयोः अनुसरणं कुर्वन्तु । मध्याह्ने तौ मत्समीपम् आनेतव्यौ । तावत् तौ निर्बाधं विहरतां नाम'' इति ।

''यथाज्ञापयति देवी'' इति उक्त्वा उपासिकायाः चत्वारः सेवकाः, मान्त्रिकः, राक्षसी च ततः निर्गतवन्तः ।

राक्षसी तु तयोः विषये नितरां क्रुद्धा आसीत् । सा क्रोधेन एव उक्तवती – ''गुरुवर्य ! विना शब्दं पृष्ठभागतः गत्वा तौ गृहीत्वा खादिष्यामि अहम् । तयोः कारणतः अस्माभिः उपासिकायाः कोपपात्रता प्राप्तव्या अभवत्, कठोरवचनानि श्रोतव्यानि अभवन् च'' इति ।

''ममापि घोरः अपमानः जातः अस्ति'' इति वदन् मान्त्रिकः एकां लघुच्छुरिकां हस्तेन गृहीत्वा – ''तौ तु सुरङ्गद्वारसमीपे स्थितौ स्याताम् । आवां तयोः हननं कृत्वा पलायनं करवाव । उपासिका मन्त्रतन्त्रादिषु निपुणा स्यात् नाम, किन्तु तस्याः कोपवचनानां श्रवणं सर्वथा असाध्यम्'' इति वदन् मान्त्रिकः व्याघ्रः इव हेङ्कुर्वन् शिरः अवनमय्य वेगेन अग्रे धावितवान् । – *(अनुवर्तते)*



महासंस्कृत्याः स्थूलदर्शनम्
प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

# १४. अधिकारबलं तपोबलं च



देवनाथः स्वस्य पौत्रं पौत्रीं च स्वीकृत्य नदीतीरे विहारं कृत्वा आगतवान् । अनन्तरम् उद्याने पौत्रीपौत्राभ्यां सह एकत्र उपविष्टवान् ।

सन्दीपः अपृच्छत् - ''पितामह, वसिष्ठः महान् ऋषिः आसीत् । किन्तु विश्वामित्रस्य व्यवहारः न अवगतः मया । एकः मुनिः अपरस्य मुनेः हननं कर्तुं कथम् उद्युक्तः भवति ? किं मुनयः अपि एतादृशचिन्तनं कर्तुम् अर्हन्ति इति तु न ज्ञायते ।''

पितामहस्य हस्ते चायचषकं ददती चमेली सन्दीपम् उद्दिश्य अवदत् - ''भ्रातः, पितुः पुरतः, अध्यापकानां पुरतः, बान्धवानां पुरतः च भवान् अत्यन्तं विनयपूर्णं व्यवहारं करोति खलु । ते यदा गच्छन्ति तदा पूर्ववत् मां पीडयन् उपहासं कुर्वन् कुचेष्टां करोति'' इति ।

देवनाथः हसन् अवदत् - ''भवत्या उक्तम् सत्यमेव । किन्तु या काऽपि घटना भवतु । तस्याः मुखद्वयं भवति । अस्माभिः सर्वदा द्विधा चिन्तनं करणीयम् । सन्दीपः कुचेष्टापरः । किन्तु केषुचित् विषयेषु सः नम्रः इव व्यवहरति । भवत्याः कथनम् अन्यरीत्या अपि भवितुम् अर्हति । 'सन्दीपः उत्तमः नम्रः च । किन्तु केषुचित् विषयेषु कुचेष्टापरतां प्रदर्शयति इत्यपि वक्तुं शक्यते खलु'' इति ।

सन्दीपः अनुजायाः कर्णं लुण्ठन् - ''श्रुतं खलु भवत्या ! विवेकशीलं चिन्तनं नाम एतत्'' इति अवदत् ।

चमेली अग्रजस्य हस्तम् अपसारयन्ती - ''आम् ! यदा विषयः भवदनुकूलः भवति तदा महान् गर्वः भवतः । अन्यथा स्वभावः तु सदा कपेः इव'' इति उपहासं कृतवती ।

तदा देवनाथः अवदत् - ''मनुष्यस्य स्वभावस्य अर्धांशः मृगीयः, अर्धांशः च दैविकः । साधुता क्रूरता च एकस्यां व्यक्तौ एव भवितुम् अर्हतः । विश्वामित्रस्य विषये शतप्रतिशतं सत्यम् एतत् । साधारणस्थितितः एव सः महर्षिस्तरं प्राप्तवान् । सः दयाहीनः क्रूरः इव दृश्यते । किन्तु तत् तस्य बाह्यस्वरूपम् । व्यक्तेः स्वभावविषये निर्णयः करणीयः चेत् आदौ तस्याः व्यक्तेः पृष्ठभूमिका अवगन्तव्या । कस्यां परिस्थितौ सः आसीत् इत्यपि अवगन्तव्यम्''

# गौरव-गाथा



इति ।

''अधिकलालनेन एव भ्राता कुचेष्टापरः अभवत् । एतत् सर्वे जानन्ति । विश्वामित्रः अपि सर्वदा क्रुद्धः भवति स्म । लघुषु विषयेषु अपि महान् कोपः तस्य । तर्हि तस्य कोपस्य किं कारणं स्यात् ?'' इति हसन्ती पृष्टवती चमेली ।

''विश्वामित्रः सत्यान्वेषी न आसीत् । शास्त्रेषु परिणतः अपि न । किन्तु सः साधारणः मनुष्यः इति परिगणयितुं न शक्यः । यतः कन्याकुब्जस्य आदर्शशासकरूपेण शासनमपि कृतवान् सः । किन्तु अहङ्कारस्य प्रमाणं तस्मिन् किञ्चित् अधिकमेव आसीत् । अन्यराजभिः सह तोलयामः चेत् ज्ञायते यत् तस्मिन् अधिकः एव अहङ्कारः आसीत् इति ।

एकदा सह मृगयार्थं गतवान् । बहुकालं यावत् मृगयां कृत्वा मध्याह्ने विश्रान्त्यर्थं वसिष्ठमुनेः आश्रमं गतवान् । वसिष्ठमुनिः राज्ञः, तत्परिवारसदस्यानां च स्वागतं कृत्वा यथोचितं सत्कारं कृतवान् । अनेकविधानि रुचिकराणि व्यञ्जनानि कारयित्वा उत्तमभोजनस्य व्यवस्थां कृतवान् । विश्वामित्रः तानि व्यञ्जनानि दृष्ट्वा आश्चर्यचकितः अभवत् । सः न अवगतवान् यत् 'कश्चन मुनिः कथम् एतादृशीं व्यवस्थां कर्तुं शक्तवान्' इति । केचन आश्रमवासिनः नदीतीरे चरन्तीं धेनुं प्रदर्श्य – 'पश्यन्तु, सा नन्दिनीनामिका होमधेनुः । वसिष्ठेन प्रार्थितं सर्वं दातुं समर्था अस्ति सा दिव्यधेनुः' इति उक्तवन्तः ।

विश्वामित्रः चिन्तितवान् – 'मुनेः आश्रमवासिनां च कृते सम्पदः, राज्यविस्तारणस्य वा अपेक्षा न भवति एव । एतादृशे आश्रमे सकलेच्छानां पूरणे समर्था नन्दिनीधेनुः अस्ति । एतादृशी धेनुः मम समीपे यदि स्यात् तर्हि प्रजानां काऽपि आपत् न स्यात् । अहं कष्टेभ्यः सर्वेषां रक्षणं कर्तुं शक्नोमि । अत्यन्तं सरलरूपेण राज्यविस्तारणम् अपि कर्तुं शक्नोमि' इति । तदा एव सः निश्चितवान् यत् येन केनापि प्रकारेण कामधेनुः प्राप्तव्या इति ।

'होमधेनुं ददातु' इति विश्वामित्रः वसिष्ठस्य पुरतः प्रस्तावम् अपि कृतवान् । किन्तु वसिष्ठः अवदत् – ''आश्रमे वासः उत राजप्रसादे इति निर्णयः होमधेनोः । सः अधिकारः मम न'' इति अवदत् ।

वसिष्ठस्य वचनैः विश्वामित्रस्य कोपः प्रवृद्धः । 'कश्चित् मुनिः राज्ञः मम इच्छां धिक्कुर्वन् अस्ति' इति चिन्तयन् मदोन्मत्तः विश्वामित्रः सैनिकान् असूचयत् – 'धेनुं राजधानीं प्रति नयन्तु' इति । किन्तु यदा सैनिकाः धेनोः निकटं गतवन्तः तदा कयाचित् अदृश्यशक्त्या ते वेगेन प्रतिप्रेषिताः ।

विश्वामित्रः राजधानीं प्रति गत्वा महासैन्यं स्वीकृत्य प्रत्यागतवान् । तेन किमपि प्रयोजनं न अभवत् । होमधेनुतः सैनिकानां कश्चन गणः



एव प्रत्यक्षः अभवत् । ते सैनिकाः विश्वामित्रस्य सैन्यं पूर्णरूपेण विनष्टं कृतवन्तः ।

विश्वामित्रः स्वस्य असहायकतां दृष्ट्वा खिन्नः अभवत् । होमधेनोः महत्त्वं ज्ञात्वा आश्चर्यचकितः अभवत् च । सः अपमानेन शिरः अवनमित-वान् । किङ्कर्तव्यविमूढः अभवत् च ।

वसिष्ठः स्वस्य तपोबलेन मम सैन्यं परास्तं कृतवान् इति विषयः विश्वामित्रेण अवगतः आसीत् । तदर्थं वसिष्ठः मानवशक्त्याः उपयोगं न कृतवान् आसीत् । अतः विश्वामित्रः राज-सिंहासनं परित्यज्य तपः आरब्धवान् । यद्यपि अल्पे एव समये सः अद्भुतशक्तीः प्राप्तवान्, तथापि स्वस्य अहङ्कारं जेतुं न शक्तवान् । राजदर्पः इतोऽपि तस्मिन् अवशिष्टः आसीत् । किन्तु अविरतं साधनं कृत्वा सः अहङ्कारम् अपि जितवान् ।

स्वस्य आकाङ्क्षां कार्यरूपेण आनेतुम् उत्कण्ठितः आसीत् विश्वामित्रः । अतः सः कञ्चित् साहसकार्यं कर्तुं निश्चितवान् । तेषु एव दिनेषु 'सत्यवत्' नामकः कश्चित् राजकुमारः आसीत् । सः त्रीणि घोरपापकार्याणि कृतवान् आसीत् इत्यतः तस्य त्रिशङ्कुः इत्यपि अभिधानम् आसीत् । सः जनकल्याणविरोधी आसीत् । अतः तस्य पिता अरण्ये वासस्य दण्डनं कृतवान् आसीत् । यदा सः राजकुमारः अरण्ये आसीत् तदा घोरः क्षामः आसीत् । तदा तत्र विश्वामित्रः तपोमग्नः आसीत् । तस्य परिवारजनानां योगक्षेमार्थं कोऽपि नासीत् । तादृशपरिस्थितौ त्रिशङ्कुः विश्वामित्रस्य परिवारस्य साहाय्यं बहुधा कृतवान् । तेन दत्तेन आहारेण एव विश्वामित्रस्य परिवारः रक्षितः अभवत् । तपः समाप्य प्रत्यागतः विश्वामित्रः त्रिशङ्कुना कृतेन साहाय्येन अत्यन्तं सन्तुष्टः अभवत् ।

अनन्तरं त्रिशङ्कोः पिता पुत्राय विहितं दण्डनं प्रतिस्वीकृतवान् । अतः त्रिशङ्कुः राजधानीं प्रति गतवान् । त्रिशङ्कुं सिंहासने उपवेश्य तस्य पिता वानप्रस्थजीवनं यापयितुम् अरण्यं गतवान् । त्रिशङ्कुः आदर्शराजः भूत्वा प्रजानां प्रेमादरपात्रम् अभवत् ।

किञ्चित्कालानन्तरं त्रिशङ्कोः मनसि 'सशरीरं स्वर्गः गन्तव्यः' इति इच्छा उत्पन्ना । सः स्वस्य इच्छां वसिष्ठस्य समीपे प्रकटितवान् । तदर्थं यज्ञस्य अपि अनुष्ठानं कृतम् । अन्ते वसिष्ठः स्पष्टरूपेण 'सशरीरं स्वर्गगमनं कष्टकरम्' इति अवदत् । शास्त्रेषु अपि तादृशः मार्गः न दर्शितः आसीत् । वसिष्ठस्य वचनैः त्रिशङ्कुः तृप्तः न अभवत् । सः अन्यान् मुनीन् विचारितवान् । किन्तु केऽपि तस्य साहाय्यं कर्तुं न शक्ताः । 'एतत् कार्यम् अशक्यम्' इत्येव सर्वैः कथितम् । अन्ते सः विश्वामित्रं शरणं गत्वा स्वस्य इच्छां प्रकटितवान् । राजर्षिः विश्वामित्रः – 'मम जीवने एषः एकः उत्तमः अवसरः' इति भावितवान् । 'इतरेभ्योऽपि अहं महान्' इति प्रदर्शयितुम् इच्छति स्म विश्वामित्रः । अतः एतत् एकं स्पर्धाह्वानम् इति मत्वा त्रिशङ्कोः कृते सशरीरं स्वर्गप्रेषणस्य वचनं दत्तवान् । स्वतपःशक्तेः विषये महान् विश्वासः आसीत् ।

विश्वामित्रः यज्ञं कृत्वा पूर्णां शक्तिं समर्प्य त्रिशङ्कुं स्वर्गस्य द्वारपर्यन्तं प्रापितवान् । किन्तु इन्द्रादयः देवाः त्रिशङ्कुं स्वर्गस्य अन्तः प्रवेशयितुं न इष्टवन्तः । अतः ते तं तत्रैव अवरुद्धवन्तः । अनन्तरं तम् अधः पातितवन्तः ।

विश्वामित्रः दृष्टवान् यत् 'त्रिशङ्कुः अधः पतन् अस्ति' इति । त्रिशङ्कुः विश्वामित्रम् आकारयन् आसीत् । विश्वामित्रः उच्चस्वरेण 'तिष्ठ' इति उक्तवान् । विश्वामित्रः स्वतपःशक्त्या नूतनं स्वर्गमेव सृष्टवान् ।''

ध्यानेन शृण्वन् स्थितः सन्दीपः अपृच्छत् - ''पितामह, किम् इदानीमपि त्रिशङ्कुः तत्रैव अस्ति ?'' इति । चमेली अपि कुतूहलेन तं प्रश्नं पृष्टवती ।

देवनाथः अवदत् - ''नैव ! त्रिशङ्कुः स्वर्गं गतवान् । किन्तु सः शरीरसहितं गन्तुं शक्तवान् वा न वा न इति जानामि ।''

''एतादृशीः घटनाः कथारूपेण केवलं न स्वीकरणीयाः । एतासाम् अन्तरार्थः अपि अस्माभिः ज्ञातव्यः । अधिकारबलात् तपोबलं श्रेष्ठं, भौतिकशक्त्याः अपि आध्यात्मिकशक्तिः श्रेष्ठा इति नीतिं बोधयति एषा कथा ।

सामान्यतः संन्यासिनः, योगिनः, ऋषयः च भौतिकशरीरम् आध्यात्मिक-प्रगतेः बाधकं भावयन्ति । किन्तु तादृशसाहसिनः, आशावादिनः आध्यात्मिक-साधनायै आत्मा यावत् प्रधानः शरीरमपि तावदेव प्रधानम् इति भावयन्ति । तेषां विश्वासः अस्ति यत् शरीरस्य अपि स्वर्गप्राप्तिः भवति इति । तादृशानां स्वप्नाः भविष्ये निश्चयेन साकारतां गच्छेयुः इति मन्ये ।''



सन्दीपः आश्चर्यं प्रकटयन् - 'भविष्ये ?...' इति अपृच्छत् ।

देवनाथः - ''मम आशयः भविष्ये इत्येव । मनुष्यस्य शरीरं निर्मलचैतन्यरूपेण भविष्ये परिवर्तितं भविष्यति इत्येतत् सत्यं विंशतिशताब्द्यां श्रीयुतेन अरविन्दमहोदयेन प्रस्तुतम् अस्ति । अस्माकम् एतत् वर्तमानं साधारणजीवनं दिव्यजीवनरूपेण परिणतं भविष्यति ।

जीवन-मरणाभ्यां नियन्त्रितं एतत् शरीरं नूतनशुभदायक-लक्षणम् आप्स्यति । तदा तत् अद्भुत-चैतन्यस्य निवासस्थानं भविष्यति । अरविन्दवर्यस्य सः एव विश्वासः आसीत्'' इति अवदत् ।



चमेली गम्भीरस्वरेण - ''तर्हि पूर्वम् अस्मासु यत् अद्भुतचैतन्यम् आसीत् तस्य अन्वेषणं करणीयम् इति खलु एतस्य तात्पर्यं सिद्धम् ?'' इति उक्तवती ।

तदा देवनाथः - ''वत्से ! सत्यम् उक्तं भवत्या'' इति वदन् पौत्रीं प्रीत्या आलिङ्गितवान् ।

# एतन्मासे जातः राष्ट्रनायकः



## सत्यजितरायः

को वा चलनचित्रं न इच्छेत् ? किन्तु वयं सर्वे प्रायः तस्य दर्शनेन सन्तृप्ताः । सत्यजितरायस्तु तस्य निर्माणतः एव सन्तोषम् अनुभवति । महामेधावी चलनचित्रनिर्माता इति जगति एव प्रसिद्धः अस्ति रायवर्यः । चलनचित्रक्षेत्रे भारतस्य नाम ख्यापितवान् सः । बहवः प्रशस्तयः प्राप्ताः सन्ति तेन । तथापि १९९२ तमे वर्षे आस्करप्रशस्तिं प्राप्नुवता तेन चलनचित्रक्षेत्रस्य मुकुटमणित्वं प्राप्तम् इव ।

सत्यजितवर्यः १९२१ तमे वर्षे मे-मासस्य द्वितीये दिनाङ्के कलकत्तानगरे जन्म प्राप्तवान् । बाल्ये एव कला चलनचित्रं च तम् आकर्षत् । कलामाध्यमविषये अभिमानः तस्य कुटुम्बे नितरां सहजः आसीत् । तस्य पितामहः उपेन्द्रकिशोरवर्यः लेखकः, मुद्रकः, प्रकाशकश्च आसीत् । पिता सुकुमाररामवर्यः अपि वङ्गालीक्षेत्रे प्रसिद्धः कृतिकारः कविश्च ।

भगवता सत्यजिति विशेषकृपा दर्शिता । तं सः महामेधाविनम् अकरोत् । सः निर्देशकः, कलाकारः, सङ्गीतनिर्देशकः, गीतलेखकः, कृतिलेखकः, सम्भाषणलेखकः, विन्यासकारः, चित्रग्राहकः, सम्पादकः चापि आसीत् । सर्वेषु क्षेत्रेषु विशेषपरिणतिः तस्य । सः अर्थशास्त्रविषये पदवीं प्राप्य १९४१ तमे वर्षे शान्तिनिकेतनं गत्वा कलां चित्रलेखनं च अधीतवान् ।

१९४३ तमे वर्षे सः विज्ञापिकासंस्थां प्रविशन् स्वस्य वृत्तिजीवनम् आरब्धवान् । तथापि चलनचित्रं निर्मातव्यम् इत्येषः सुप्तः अभिलाषः तस्य अन्तरङ्गे आसीत् एव । १९५० तमे वर्षे संस्थाजनाः तं लण्डन्नगरं प्रति प्रेषितवन्तः । सः तत्र अध्ययनं कुर्वन् एव पञ्चमासाभ्यन्तरे शताधिकानि युरोपियन्-चलनचित्राणि दृष्टवान् । 'द्विचक्रिकाचोरः' इत्येतत् भारतीयं चलनचित्रं तस्मिन् विशेषपरिणामम् अजनयत् । 'चलनचित्रं निर्मातव्यम् एव' इत्येषः तदीयः सङ्कल्पः दृढः जातः ।

'पथेरपाञ्चाली' इत्येतस्य निर्माणेन सः स्वस्य चलनचित्रनिर्माणकार्यम् आरब्धवान् । तत् तं प्रसिद्धम् अकरोत् । १९५६ तमे वर्षे कन्नास्चलनचित्रोत्सवे तत् प्रदर्शितं जातम् । 'अत्युत्तमः मानवीयोल्लेखः' इति सा प्रशंसिता जाता । तेन निर्मितेषु चित्रेषु कानिचन – अपराजितः (१९५४), अपूर्वः संसारः (१९५९), चारुलता (१९६४), शतरञ्जके खिलाडि (१९७७) आगन्तुकः (१९९१) इत्यादीनि । 'जय बाबा फेलुनाथः' इत्येतत् अत्युत्तमबालचित्रत्वेन राष्ट्रियप्रशस्तिं प्राप्नोत् । तेन चत्वारि बालचित्राणि अपि अविहाय ३० चलनचित्राणि निर्मितानि । मित्रैः सहोद्योगिभिः च सः प्रेम्णा निर्दिश्यते – 'मणिकदा' इति । मानवमनसः प्रसङ्गविशेषस्य च अवगमने तस्य विशेषसामर्थ्यम् । बालानां कृते तेन रचितासु सङ्गीतकृतिषु द्वयं प्रसिद्धं – 'गुपी गौने बघा बैने' 'हीरक् राजर् देशे' इति ।

सः व्यङ्ग्यचित्रकारः लेखकः चापि । पितामहेन आरब्धायाः 'सन्देश'नामिकायाः बालपत्रिकायाः उज्जीवनं १९६१ तमे वर्षे कुर्वता तेन बालानां निमित्तं चित्राणि लिखितानि, कथाश्च लिखिताः ।

१९९२ तमे वर्षे तेन भारतरत्नप्रशस्तिः प्राप्ता । तस्मिन् एव वर्षे एप्रिल्मासे सः दिवङ्गतः । चलनचित्रप्रियाः अद्यापि तं साभिमानं स्मरन्ति ।

# अपूर्वः भारतप्रवासः

प्रियमित्राणि,

तृषा तुहिनः च भाग्यशालिनौ । तौ ग्रीष्मविरामदिनेषु समग्रे देशे आनन्ददायकं प्रवासं कर्तुम् इच्छतः । तौ भवतः सर्वान् अपि प्रवासार्थं निमन्त्रयतः ।

चन्दमामायाः एषा सञ्चिका भवतः सर्वान् भारते समग्रे सञ्चारयति । तदवसरे भवन्तः अतिप्रसिद्धानि नातिप्रसिद्धानि च कानिचन स्थलानि द्रक्ष्यन्ति । तथैव कांश्चन समुदाचारान्, काश्चन परम्पराः च ज्ञास्यन्ति अपि । ते भवद्दृष्ट्या नूतनाः आश्चर्यकराः च भवेयुः कदाचित् । भवन्तः अत्र कासुचित् क्रियासु भागग्राहिणः अपि भविष्यन्ति । द्वित्राणि कौशलानि अपि अत्र ज्ञायन्ते । वयं यत् एतत् यच्छन्तः स्मः तत् भवतां रुच्यै स्यात् इति भावयामः वयम् ।

शुभं भूयात् ।

Viswam/.

विश्वम्



'अहो !' इति उक्तवती तृषा । 'अहा !' इति उक्तवान् तस्याः भ्राता तुहिनः । उभौ अपि अङ्कपत्रेण सह पितुः समीपं धावितवन्तौ महता उत्साहेन । उभौ अपि स्वकक्ष्यायां प्रथमौ आस्ताम् । ''अत्युत्तमम् । प्रशंसार्हा प्रगतिः । स्वकीयं कार्यं सम्यक् एव निरूढं भवद्भ्याम् । इदानीं मया यत् करणीयं तदेव अवशिष्टम्'' - पिता उक्तवान् ।



''यदि परीक्षायाम् उत्तमः फलितांशः प्राप्यते तर्हि भारतप्रवासार्थं भवन्तौ नेष्यामि'' इति उक्तवान् आसीत् पिता । ताभ्यां च उत्तमान् अङ्कान् प्राप्नुवद्भ्यां भारत-प्रवासावसरः सम्प्राप्तः आसीत् । एतदनुगुणं पिता द्रष्टव्यानि स्थलानि निश्चित्य प्रवासयोजनां कृत्वा चिटिकादिकं क्रीत्वा व्यवस्थितयोजनां कृतवान् । तैः



प्रवासावसरे क्वचित् ट्रेन्यानेन, पुनः क्वचित् विमानेन, अन्यत्र क्वचित् लोकयानेन, कार्यानेन, वृषभशकटेन चापि प्रयाणं करणीयम् आसीत् । वासः क्वचित् वसतिगृहेषु, क्वचित् समुद्रतीरे, क्वचित् अन्यत्र च करणीयः इति निश्चितम् ।



## यात्रासूचनाः

अहो, भवन्तः अपि प्रयाणार्थं सिद्धाः सन्ति ?

- प्रयाणचिटिकारक्षणसम्बद्धानि सर्वाणि पत्रादीनि स्वीकृतानि किम् इति परिशील्यताम् ।
- नेयवस्तूनां भारः अल्पः भवतु । वस्त्राणि अपि तादृशानि एव भवन्तु ।
- रोकधननयनात् अपि यात्रिकचेक्पत्रस्य (Traveller's cheque) क्रेडिट्कार्ड् इत्यस्य वा नयनं वरम् ।
- प्रथमचिकित्सासम्बद्धपेटिकायाः नयनं न विस्मर्तव्यम् ।
- सूर्योपनेत्रं, तापनिवारकलेप्यम् इत्यादीनि अवश्यं नेतव्यानि ।
- यदि पर्वतारोहणादिसाहसयात्रा कर्तुम् इष्यते तर्हि पृष्ठस्यूतः, जलकूपी, सिद्धाहारः, करदीपः, पटमण्डपः इत्यादयः नेतव्याः । चित्रग्राहकं, दूरदृश्यदर्शकं, फिल्म्स् इत्यादीनि अविस्मृत्य नेतव्यानि ।

शुभावः पन्थानः सन्तु ।









बहवः भारतीयराजाः स्वराज्ये स्वकीयम् एव रैल्यानं चालयन्ति स्म । राजानः स्वनिमित्तं पृथक्प्रकोष्ठं वैभवेन सज्जीकारयन्ति स्म । बरोडाराज्यस्य गायकवाडस्य रैल्प्रकोष्ठे सिंहासनम् अपि भवति स्म ।

द्वौ बालौ मातापितृभ्यां सह मुम्बयीस्थं विक्टोरियारेल्वेस्थानकम् आगतवन्तौ । "ट्रेन्यानेन प्रयाणम् आनन्दकरम्" इति उक्तवान् तुहिनः । "अहो, अतिप्राचीनः मलिनः यानप्रकोष्ठः" इति वदन्ती नासिकां वक्रीकृतवती तृषा ।

'भारतीया रैल्व्यवस्था अतिप्राचीना' इति हसन् अवदत् पिता - "आंग्लेयाः भारते रैलव्यवस्थाम् आनीतवन्तः ।"

"भारतस्य प्रथमरैल्यानं मुम्बयीतः थानापर्यन्तं सञ्चारम् अकरोत् । एतत् १८५९ तमवर्षस्य एप्रिल्मासस्य १६ दिनाङ्के प्रवृत्तम् । तच्च विरामदिनम् आसीत् । अतः चतुश्शताधिकजनाः तेन रैल्यानेन प्रयाणम् अकुर्वन् । राजा राज्यपालीयवाद्यवृन्दस्य वाद्यवादनं कारयित्वा २१ भुशुण्डीनां प्रयोगेण गौरवं समर्प्य प्रयाणस्य शुभम् आशंसितवान् ।

"अहो !" इति आश्चर्यवचनम् उक्तवती तृषा यानात् बहिः सञ्चरन्तम् एकम् आल्सेषियन्-शुनकं पश्यन्ती ।



"पालिताः शुनकादयः अपि रैल्यानेन नेतुं शक्याः । किन्तु तदा प्रथमश्रेणीकप्रयाणम् एव करणीयम् । द्विस्थानात्मकः चतुःस्थानात्मकः वा यानप्रकोष्ठः आरक्षणीयः । अधिकं शुल्कं दातव्यं च" इति विवृतवती माता ।

आदौ तैः गुजरात्‌राज्यं गतम्‌ । कर्णावत्याम्‌ (अहमदाबादनगरे) ते वाताटसङ्ग्रहालयं गतवन्तः । तुहिनसदृशानां कृते चित्ताकर्षकं स्थानं तत्‌ । सहस्राधिकाः वाताटाः तत्र सङ्गृहीताः सन्ति । प्रपञ्चस्तरे एतत्‌ द्वितीयम्‌ । प्रथमं तावत्‌ टोकियोनगरे अस्ति । ४५० पत्रखण्डैः





निर्मितः वाताटः अत्रत्येषु अन्यतमः ।

राजस्थानं दर्शनयोग्यं स्थलम्‌ । जयपुरे ते 'जन्तरमन्तरं'नामकं तारादर्शनालयं गतवन्तः । सः तारादर्शनालयः, तत्‌ नगरं च द्वितीयेन सवायिजयसिंहेन निर्मितम्‌ । जयसिंहः उत्तमः राजा आसीत्‌ । सः ज्योतिश्शास्त्रज्ञः अपि आसीत्‌ । सः स्थानीयसमयस्य, ग्रहणकालादीनां च ज्ञानार्थम्‌ एतं तारादर्शनालयं निर्मितवान्‌ ।



''किमपि दृढतया गृह्णन्तु । अन्यथा वायुः नयेत्‌'' इति हसन्ती उक्तवती माता । एतत्‌ सत्यम्‌ एव इति भावयन्तौ तौ समीपस्थम्‌ आधारं गृहीतवन्तौ । एतत्‌ दृष्ट्वा माता उच्चैः हसितवती । बालौ च लज्जितौ जातौ । 'हवामहल्‌' पञ्चाङ्गात्मकं भवनं तत्‌ । तस्मिन्‌ ९५३ वातायनानि सन्ति । समग्रे भवने शीतलः परिसरः यथा सदा स्यात्‌ तथा विशिष्टशैल्या निर्मितम्‌ अस्ति तत्‌ भवनम्‌ ।










"भवन्तौ इदानीं पवित्रं स्थलं प्रविशन्तौ स्तः । अतः सम्भाषणं कुचेष्टा वा मा भवतु" इति तृषातुहिनौ वदन्ती माता शाटिकायाः आञ्चलेन शिरः आवृतवती । वस्तुतः एतादृश्याः सूचनायाः आवश्यकता एव न आसीत् । यतः अमृतसरस्थस्य तस्य सुवर्णमन्दिरस्य प्रवेशसमनन्तरमेव तत्रत्यस्य पवित्रपरिसरस्य कारणात् एव तौ बालौ गम्भीरौ जातौ आस्ताम् ।

"एतत् सुवर्णमन्दिरं सर्वमतसमन्वयभावस्य प्रत्यक्षम् उदाहरणम्" इति वदन् पिता तदीयं वैशिष्ट्यं सङ्ग्रहेण विवृतवान् - "एतस्य निमित्तं भूमिः चक्रवर्तिना अकबरेण उपायनीकृता । १५७७ तमे वर्षे गुरुः रामदासवर्यः एतस्य निर्माणार्थं भूमिखननकार्यम् आरब्धवान् । १५८९ तमे वर्षे मुस्लिम्धर्मगुरुः मियानुमिर्वर्यः भवननिर्माणार्थम् आधारशिलां स्थापितवान् ।"

सुवर्णमन्दिरस्य अन्तर्भागे स्थितं हरमन्दिरसाहेबभवनं प्रविष्टवन्तौ बालौ । तत्र सिक्खानां पवित्रः ग्रन्थः 'ग्रन्थसाहिब्' स्थापितः आसीत् । भक्तानां कश्चन गणः मन्दस्वरेण कीर्तनानि गायन् उपविष्टवान् आसीत् तत्र ।

"अत्र किञ्चित् करसेवां करवाम" इति सूचितवान् पिता । सर्वे उत्साहेन स्वयंसेवार्थं प्रवृत्ताः । अन्ये भक्ताः इव ते अपि सम्मार्जनीं स्वीकृत्य भवनस्य स्वच्छतां कृतवन्तः । पिता पादरक्षाणां व्यवस्थिततया स्थापने साहाय्यं कृतवान् । माता पाकशालां गत्वा पाककार्ये साहाय्यं कृतवती ।

करसेवायाः अन्ते ते देवस्थानस्य अन्तः एव स्थितायां भोजनशालायाम् उपविष्टवन्तः भोजनार्थम् । भोजनं सरलं स्वादुयुक्तं च आसीत् । भोजने रोटिका, व्यञ्जनं, सूपः च आसीत् ।



बालाभ्यां चिरनिरीक्षितः प्रवासभागः अयम् । भारतस्य उत्तरभागे तौ अरण्यमयेषु राष्ट्रियोद्यानादिषु आनन्देन अटितवन्तौ । ''वयम् अन्तः प्रविश्य दक्षिणदिक्तः अग्रे गच्छन्तः विविधान् जन्तून् पश्याम'' इति अवदत् तृषा । तौ बालौ एतस्मिन् राष्ट्रियोद्याने जन्तूनां दर्शनार्थं यं मार्गम् अनुसृतवन्तौ तं किं भवन्तः अभिज्ञातुं शक्नुयुः ?





भवन्तः कुलूखनीप्रदेशे स्थितं 'हिमालयीय-राष्ट्रियोद्यानं' द्रष्टुम् अर्हन्ति एप्रिल्तः जून्-अभ्यन्तरे । तत्र भवद्भिः हिमव्याघ्रः, आरण्यकमेषः, याक्पशुः, बकाः, धूसराः कृष्णाः च भल्लूकाः इत्यादयः जन्तुविशेषाः प्राधान्येन द्रष्टुं शक्याः ।



'सिवालिक्'प्रदेशे अस्ति कार्बेट्राष्ट्रियोद्यानम् । प्रसिद्धस्य आंग्लदेशीयस्य मृगयाप्रियस्य जिम् कार्बेट्वर्यस्य स्मृत्यर्थम् एतत् राष्ट्रियोद्यानं प्रतिष्ठापितम् । फेब्रवरी-मे-मासयोः मध्ये स्थितः कालः एतं प्रदेशं द्रष्टुं योग्यः । भवन्तः अत्र व्याघ्रान्, गजान्, कृष्णहरिणान्, नीलगाय्पशून्, सम्बार्-चितालहरिणान्, वन्यवराहान्, कण्टकपशून्, चतुःशृङ्गोपेतान् हरिणान्, एतादृशान् अन्यान् विशिष्टजन्तून् चापि द्रष्टुम् अर्हन्ति ।



डुड्वाराष्ट्रियोद्यानम् अस्ति हिमालयोपत्यकायाम् । वस्तुतः एतत् 'स्वाम्प्जातीयानां हरिणानां संरक्षणार्थं निर्मितम् । किन्तु अग्रे चित्रक-व्याघ्रादीनां संरक्षणम् अत्र आरब्धम् । 'रीनो'पशूनां संरक्षणम् अपि तत्र क्रियते एषु दिनेषु । अनेकविधाः पक्षिणः अपि अत्र द्रष्टुं शक्याः ।



व्याघ्राः, कृष्णहरिणाः, चिताल्-साम्बार्-हरिणाः, नील्गाय्नामकाः पशवः, विविधपक्षिणः इत्यादयः द्रष्टुं शक्याः बन्धावघर्-राष्ट्रियोद्याने । फेब्रवरी-जून्मासयोः अभ्यन्तरे स्थितः कालः एतत् उद्यानं द्रष्टुं योग्यः कालः ।



१९७३ तमे वर्षे व्याघ्रसन्ततिसंरक्षणोद्देशेन 'पलमावु'राष्ट्रियोद्यानम् आरब्धम् । अत्र हथिबज्वा, मधुचन् इत्येते वीक्षणभवने आरुह्य भवन्तः अनेकान् पशून्, पक्षिणः च द्रष्टुम् अर्हन्ति । एतत् द्रष्टुं समुचितः कालः तावत् अक्टोबर्-मे-मासयोः मध्ये स्थितः कालः ।



बिन्दुयुक्तस्थानेषु वर्णयोजनेन ज्ञायते - वयं कुत्र आस्म इति ।

तुहिनः यानात् उत्प्लुत्य शरीरं सञ्चारयोग्यं यावत् कृतवान् तावता तृषा कुतूहलेन सर्वत्र पश्यन्ती आसीत् । तौ कुत्र स्तः ? अत्रास्ति सङ्केतः । एतत् बिहारराज्ये अतिपवित्रं स्थानम् । एतत्स्थानसम्बद्धस्य परमपूज्यस्य कस्यचित् महात्मनः चित्रम् अत्र लिखितम् अस्ति तुहिनेन । बिन्दुयुक्तेषु स्थलेषु वर्णाः यदि योज्यते तर्हिः ज्ञायते - चित्रस्थः कः इति । ततः ज्ञातुं शक्यते यत् तैः कुत्र गतम् आसीत् इति ।

इतिहासात् वर्तमानम् आगच्छाम वयम् । तैः अयोनिर्माणकेन्द्रभूतेषु नगरेषु प्रवासः कृतः । अव्यवस्थितया स्थितानि अक्षराणि संयोज्य तैः दृष्टानि नगराणि अभिज्ञायन्ताम् ।

१. का रो बो

२. पु ज शे म र ट म्

३. र्गा पु र दु म्

५. ला रू के र्

. यि भि ला

उत्तराणि -

वर्णयोजनम् -

बुद्धगया, यत्र भगवान् बुद्धः आत्मसाक्षात्कारं प्राप्तवान् ।

अयोनिर्माणकेन्द्राणि नगराणि -

१. बोकारो
२. जमशेटपुरम्
३. दुर्गापुरम्
४. भिलायि
५. रूर्केला





तच्च तेषां कल्कत्तानगरवासस्य प्रथमं दिनम् । तथापि तत्रत्यम् औष्ण्यं तान् नितराम् अबाधत । तृषा तुहिनः च औष्ण्यकारणतः नितरां खिन्नौ श्रान्तौ च । एतत् दृष्ट्वा पितुः मित्रं चटर्जी, यश्च आतिथेयः आसीत्, अवदत् - "आगच्छताम् । अहं भवन्तौ पारम्परिकमधुरखाद्यानाम् आपणं नेष्यामि । तेषां मधुराणां सेवनतः भवतोः उत्साहः शक्तिः च वर्धेत" इति । झटिति एव तौ चटर्जीवर्यम् अनुसृतवन्तौ । "किं भवान् रसगोलापणं नेष्यति आवाम् ?" - चटर्जीवर्यस्य अनुसरणार्थं लघुधावनं कुर्वती पृष्टवती तृषा । "आम् । तत्र न केवलं रसगोलानि, अपि तु राजभोगः, रसमलै, मोहनपायसं, चाम् चाम्, मिष्टदायि इत्यादयः अपि प्राप्यन्ते ।" तुहिनः नेत्रगोलकं रसगोलाकारेण विस्तारयन् आश्चर्येण अवदत् - "अहो ! बहूनि सन्ति बङ्गालीयानि मधुरखाद्यानि !" इति ।



रसगोलकम् ऐदम्प्राथम्येन निर्मितं सुतानतीनगरीयेण नवीनचन्द्रदासेन १८६८ तमे वर्षे । सः क्षीरेण दधि निर्माय दध्नः जलांशम् अपनीय, दधिगोलानि विरचय्य शर्करापाकरसेन पक्त्वा रसगोलकानि निर्मितवान् ।



शर्करापाकद्रवेण भृष्टस्य रवाद्रव्यस्य च क्षीरीयखोवाद्रव्यस्य मिश्रणात् सज्जीकृतः गोलाकारकः कश्चन पाकः 'लेडिकेनी' नाम । 'वैसराय्' पदस्थस्य पत्न्याः गौरवार्थं कन्निङ्ग्-वर्यया अयं पाकः ऐदम्प्राथम्येन सज्जीकृतः । 'लेडि कन्निङ्ग्' इत्येतत् नाम भारतीयानां जिह्वासु 'लेडिकेनी' इति रूपान्तरं प्राप्नोत् ।

मिष्टदायिनः निर्माणक्रमः -



एकलीटर्परिमितं क्षीरं तावत् क्वथयन्तु, यावत् तत् अर्धलीटर्परिमितं न भवति ।



भर्जनपात्रे चमसमितां शर्करां स्थापयित्वा, द्रवीभूतां तां तावत् भर्जयन्तु, यावत् तत् धूम्रवर्णतां न प्राप्नोति ।



एवं सज्जीकृतं शर्करापाकम् उष्णे क्षीरे पातयन्तु ।



चषकपरिमितं सद्योनिर्मितं दधि अपि तत्र योजयन्तु ।



सम्यक् आलोड्य सिद्धं पाकं लघुषु मृत्पात्रेषु स्थापयित्वा शीतलीकुर्वन्तु ।

काश्चित् घण्टाः अतीताः यदा भवन्ति, तदा भवतां मिष्टदायि खादनयोग्यतया सिद्धम् ।



रमणीयः पर्वतीयपरिसरः, चायवाटिकाः, शीतलकालः, मनोहारिसङ्गीतं, तालबद्धं नृत्यम् इत्यादीनि ईशान्यभारतस्य वैशिष्ट्यानि । तौ बालौ तस्मिन् प्रदेशे सर्वत्र सञ्चारं कृतवन्तौ । ताभ्यां कुत्र कुत्र गतम् इति ज्ञातुम् इच्छन्ति खलु भवन्तः ? ताभ्यां यत्र यत्र गतं तानि स्थलानि अभिज्ञातुम् अत्र सन्ति केचन सङ्केताः । तान् अवलम्ब्य ताभ्यां गतानि स्थलानि जानन्तु तावत् –

१. 'सङ्गाय्'नामकाः हरिणाः धावन्तः नृत्यन्तः च दृश्यन्ते अत्र ।

..........................

२. अत्र वेणुशलाकाः वाद्यध्वन्यनुगुणं पदनिक्षेपे साहाय्यम् आचरन्ति ।

..........................

३. अहो ! जगति बृहत्तमत्वेन ख्यातः नदीनिर्मितः द्वीपः अस्ति अत्र !

..........................

४. एशियाखण्डे एव विशालतमत्वेन ख्याता चायवाटिका अत्र अस्ति !

..........................

५. चीनातः आगतः ब्रह्मपुत्रनदः अत्र भारतस्य मुख्यभूभागं प्रविशति ।

..........................

६. अत्र या बुद्धप्रतिमा दृश्यते तादृशी नान्यत्र दृश्यते एशियाखण्डे । षष्ठस्य दलैलामस्य जन्म अत्रैव जातम् ।

..........................

७. अहो, वृष्टिरहो वृष्टिः वृष्टिरेव हि सर्वदा । अत्र यावती वृष्टिः तावती न भवति जगति अन्यत्र कुत्रापि ।

..........................

८. मेघालयस्य एतस्मिन् विश्रान्तिस्थले शीतलवायुः हितस्पर्शं जनयन् जनान् आश्चर्यचकितान् करोति ।

..........................

९. अपूर्वस्य एकभृङ्गिनः रिनोसार्स्जीविनः अत्र विविक्तस्थले निर्बाधं सञ्चरन्ति ।

..........................

यदि स्थलानि अभिज्ञातुं न शक्तं तर्हि पुटम् अधोमुखं कृत्वा उत्तराणि जानन्तु ।

उत्तराणि –

१. कैबुलाम्जावु
२. ऐझवाल्
३. माजुलीद्वीपः
४. मोनालोरि
५. लोहितः
६. तावाङ्ग्
७. चिरापुञ्जी
८. शिल्लाङ्ग्
९. काझिरङ्गा

























तृषा तुहिनश्च भरतनाट्य-
कक्ष्यायाः अपि च्छात्रौ इति
किं भवन्तः जानन्ति ? तयोः
नाट्यप्रियतां दृष्ट्वैव पिता
निश्चितवान् आसीत् - अन्याः अपि
काश्चन नाट्यशैल्यः
दर्शनीयाः इति । नाट्यं
पश्यन् तुहिनः
उद्घोषितवान् - ''अहम् एतान् अपि
नाट्यप्रकारान् अभ्यस्यामि'' इति ।

मणिपुरे ते पारम्परिकमणिपुरीयनृत्यं
ट्वन्तः । तत् पुराणाधारितम् । कृष्णलीला एव नृत्यवस्तु । तरुणस्य
ष्णस्य विविधान् व्यवहारान् दर्शयति तत् । दर्पणोपेताः वेषभूषणादयः
त्यस्य सौन्दर्यं वर्धयन्ति स्म ।



भुवनेश्वरे ते ओडिस्सीयनृत्यप्रकारम् अपि दृष्टवन्तः । भारतीयनाट्यक्षेत्रे
ओडिस्सीयनृत्यप्रकारः एव अतिप्राचीनः इति
पुरातत्त्वशास्त्रज्ञानाम् अभिप्रायः । 'रानी-
गुम्पा'सदृशीषु बह्वीषु गुहासु अयम्
ओडिस्सीयनृत्यप्रकारः चित्रितः दृश्यते ।
क्रि. पू. २०० वर्षेभ्यः पूर्वम् एव
तासु ओडिस्सीयनृत्यस्य विविधाः
भङ्ग्यः चित्रिताः आसन् ।



च्यूनृत्यस्य प्रकारद्वयम् अपि तैः
दृष्टम् । तुहिनाय तत् नृत्यं विशेषतः
अरोचत । पूर्वभारतस्य जनप्रियः
जानपदनृत्यप्रकारः 'च्यू'नाम । च्यूनृत्य-
पटुभिः भावप्रकाशनार्थम् विविधाङ्ग-
चालनस्य अभ्यासः करणीयः ।
अवनमन कूर्दनादयः च
अभ्यस्तव्याः भवन्ति ।
नृत्यस्य कथाभागाः रामायणात्
महाभारतात् वा चीयन्ते ।
'पुरुलियाच्यू' इत्येषः
तु पश्चिमबङ्गालीयः
सिद्धः नृत्यप्रकारः । षट् सप्त वा पुरुषाः
ाट्यकाराः कागदं, वस्त्रं, मृत्तिकां च
ीकृत्य सज्जीकृतं मुखावरणं धृत्वा नृत्यं कुर्वन्ति ।



'मयूरभञ्जी'नामकः
बिहारीयः पारम्परिकः
नृत्यप्रकारः चैत्रोत्सव-
समये विशेषतः
प्रदर्श्यते । नृत्य-
रूपकमिश्रितः अयम् ।
कोमला कला, मधुरः
पदविन्यासः च अत्र
मिश्रितः भवति ।

ओरिस्साराज्यस्य लघुनगरम् सम्भलपुरम् । तत् यदा प्राप्तं तदा माता इष्टवती हस्तनिर्मितशाटिकाः क्रेतव्याः इति ।

सम्भलपुरे तादृशशाटिकानां विक्रयणम् आधिक्येन प्रचलति । आपणे 'अहा' 'अहो' 'अहहा' इति वदन्ती माता यदा शाटिकानां परिशीलनेन समययापनम् आरब्धवती तदा बालौ, तदीयः पिता च नीरसताम् अनुभूतवन्तः । 'वयम् एताम् अत्रैव परित्यज्य प्रयाणम् अनुवर्तयाम' इति ते निर्णीतवन्तः । तथापि माता तद्विषये अधिकचिन्तां न प्रकाशितवती !!

गोण्डप्रदेशस्य दर्शनार्थं दिनद्वयं निश्चितम् आसीत् । सम्भलपुरतः छत्तीसगढनगरं न अतिदूरे । जीप्यानेन द्वित्रघण्टात्मकं प्रयाणं करणीयं तत् प्राप्तुम् । ते गोण्डग्रामं गतवन्तः । तत्र तद्दिने साप्ताहिकवाणिज्यं प्रचलति स्म । शतशः वनवासिनः अन्यग्रामीणाः च तत्र सम्मिलिताः आसन् । 'महुवा'पुष्पाणि, मधु, वस्त्राणि, अग्निपेटिकाः, लवणम्, मरीचिकाः इत्यादयः तत्र विक्रीयन्ते ।





तुहिनः तृषा च विपण्यां सर्वत्र अटितवन्तौ । ''कानि एतानि पुष्पाणि ? मया तु इतः पूर्वम् एतानि न दृष्टानि'' इति उक्तवती तृषा । ''एतानि महुवापुष्पाणि'' इति उक्तवान् आतिथेयः पट्टनायकः ।

गोण्डजातीयानां जीवने महुवापुष्पस्य विशेषप्राधान्यम् । ते महुवापुष्पतः मद्यादीन् निर्माय पवित्रे उत्सवदिने आराध्यदेवतायै अर्पयन्ति । पुष्पेभ्यः तैलम् अपि निर्मीयते । तस्य वृक्षस्य फलानि खादनयोग्यानि । भारते वनवासिषु गोण्डजातीयानाम् एव सङ्ख्या अधिका । ते छत्तीसगढप्रदेशे निवसन्ति । छत्तीसगढम् इदानीं स्वतन्त्रं राज्यं जातम् अस्ति । छत्तीसगढस्य पार्श्वे स्तः ओरिस्सा-आन्ध्रप्रदेशौ ।

विपण्यां भ्रमणं समाप्य ते गोण्डीयम् आहारं सेवितवन्तः । स च आहारः तुहिनेन इष्टः, न तु तृषया । सम्भलपुरं प्रति प्रतिगमनसमयः आसन्नः इति स्मारितवान् पिता ।





आन्ध्रप्रदेशं गतः को वा प्रसिद्धस्य तिरुपतिदेवालयस्य दर्शनात् वञ्चितः
नवितुम् इच्छेत् ? तत्रत्यः आराध्यदेवः वेङ्कटेश्वरः । तदीयं मन्दिरं
तिरुमलनामकस्य पर्वतस्य उपरि अस्ति । समुद्रस्तरात् ८४०मीटर्-उन्नते स्तरे
अस्ति तत् । ''अम्ब ! अत्र किमर्थं बहवः मुण्डितशिरस्काः दृश्यन्ते ?'' इति
ृष्टवती तृषा । ''दक्षिणभारतीयाः बहवः प्रतिज्ञां कुर्वन्ति यत् भगवते केशान्
समर्पयिष्यामि इति । अतः ते अत्र आगत्य केशान् भगवते अर्पयन्ति'' इति
विवरणम् उक्तवती माता । ''अहम् अपि भगवते केशान्
समर्पयितुम् [illegible]'' इति उक्तवान् पिता । बालौ तस्य
विरोधं कृतवन्तौ ।
पिता तान् लड्डुक-
विक्रयणस्थानं नीतवान् ।
''तिरुपतीयानि लड्डुकानि
आकारेण, गुणेन, रुच्या च
अतिप्रसिद्धानि ।''
''अहो ! एतस्य वर्णनार्थं शब्दाः
एव न सन्ति !'' इति आश्चर्येण उक्तवान् तुहिनः
तमिळुनाडुराज्ये स्थितस्य बृहदीश्वरमन्दिरस्य ६६ मीटर-उन्नतं गोपुरं दृष्ट्वा ।
ग्रानैट्शिलाभिः निर्मितं बृहत् मन्दिरम् एतत् एव ।

अत्रान्तरे तृषा कुत्रापि अदृश्यतां गता । माता एतत् आदौ लक्षितवती ।
तृषायाः अन्वेषणार्थं पिता तुहिनः च निर्गतवन्तौ ।
''सा मन्दिरप्रदेशात् दूरं गता तु न स्यात् खलु ?''
इति चिन्तामिश्रितस्वरेण उक्तवती माता । तैः सर्वत्र
अन्वेषणं कृतम् । अन्ते सा दृष्टा मन्दिरस्य पुरतः ।
तत्र काचित् भूमौ रङ्गवल्लीं लिखन्ती आसीत् । तृषा तत् कुतूहलेन पश्यति स्म । सा
गृहिणी स्वस्य अपरिष्कृतया आङ्ग्लभाषया विवृतवती - ''एतत् 'कोलम्' इति
उच्यते । तण्डुलपिष्टेन एतत् रच्यते । आदौ बिन्दून् निर्दिश्य तान् परितः
पिष्टरेखाभिः आकारः रचनीयः । भवतां पुत्री स्तम्भेषु स्थितं विन्यासं
कुतूहलेन पश्यन्ती आसीत् । अतः ताम् अहम् एतत् रङ्गवल्लीलेखनं
पाठयितुम् इष्टवती'' इति ।

तया गृहिण्या रचितः रङ्गवल्लीविन्यासः अधः अस्ति । भवन्तः
अपि तम् अनुकुर्वन्तः रङ्गवल्लीलेखनस्य अभ्यासं कुर्वन्तु ।

तुहिनः तृषा च केरलराज्ये कोचिन्नगरं प्राप्तवन्तौ । पिता तौ सेण्ट् फ्रन्सिन्-क्रैस्तालयं नीतवान् । भारते युरोपीयशैल्या रचितः प्राचीनः क्रैस्तालयः सः । यात्रिकान् उद्दिश्य तस्य क्रैस्तालयस्य इतिहास-सम्बद्धां कथां विवृणोति स्म विवरणकारः – ''प्रसिद्धस्य नाविकस्य वास्कोडगामस्य शवम् अत्र निखातम्'' इति ।

''अत्र आगमनस्य त्रिशतवर्षेभ्यः पूर्वं यूरोपखण्डे रोमादिदेशेषु च क्रिस्तमतं सुप्रतिष्ठितम् आसीत् । सेण्ट् थामस्नामकः क्रिस्तस्य द्वादशशिष्येषु अन्यतमः आसीत् । सः क्रि.श. ५२ तमे वर्षे केरलराज्यम् आगतवान् । सः तीरप्रदेशेषु बहूनि क्रैस्तमन्दिराणि प्रतिष्ठापितवान् । केरलं बहुसंस्कृतिमयः प्रदेशः । सर्वाणि मतानि, अनेकाः



संस्कृतयश्च सन्ति अत्र'' इति उक्तवती माता, यस्याश्च मातृभाषा मलयाळम् एव आसीत् । सा पुनः उक्तवती – ''क्रिस्तजनाः यथा, तथैव ज्यूजनाः अपि सन्ति अत्र । ते तु राज्ञः सोलमन्-वर्यस्य नौकया सह आगताः । केचन कथयन्ति यत् मतप्रवर्तकः एव कांश्चन धर्मगुरून् ६१० तमे क्रिस्ताब्दे केरलराज्यं प्रति प्रेषितवान् इति । चतुर्दशे शतके क्विलान्नगरे ५ क्रैस्तालयाः आसन् इति श्रूयते''

अपूर्वाणि उडुपिखाद्यानि !

कर्णाटकराज्यं प्रविश्य श्रवणबेळगोळं प्राप्य ते उडुपीयम् उपाहारमन्दिरं गत्वा इड्लीवडादिकं यदा खादितवन्तः तदा तेषां श्रान्तिः अपगता इव । १७ मीटर्-उन्नता भगवतः गोम्मटेश्वरस्य मूर्तिः तृषया ऐदम्प्राथम्येन दृष्टा । श्रावणबेळगोळं कर्णाटकस्थं लघु नगरम् । भारते स्थितेषु जैनानां तीर्थक्षेत्रेषु अतिप्राचीनम् एतत् । गोम्मटेश्वरमूर्तिः २६ कि.मी. दूरात् अपि द्रष्टुं शक्या । जगति अत्युन्नता अखण्डशिलामूर्तिः एषा एव ।

कर्णाटके बिजापुरनगरे प्रतिध्वन्युत्पादकस्य गोलगुम्बज्भवनस्य एकस्मिन् पार्श्वे स्थित्वा तृषा उक्तवती – 'अहो हो हो ।' भवनस्य अपरपार्श्वे स्थितः तुहिनः तत् वचनं स्पष्टतया श्रुतवान् आसीत् । 'अहो अपूर्वम् एतत् !' इति आश्चर्येण उक्तवान् तुहिनः । ''अतः एव एतत् उच्यते – प्रतिध्वन्युत्पादकं भवनम् इति'' इति उक्तवान् पिता । गोलाकारेण गोपुरेण युक्तेषु बृहत्सु भवनेषु गोलगुम्बज-भवनं द्वितीयस्थाने अस्ति । प्राथम्यं तु रोम्नगरस्य सेण्ट्पीटर्भवनस्य । तस्याः गोलाकाररचनायाः व्यासः ४२ मीटरात्मकः । सा रचना स्तम्भानाम् उपरि अस्ति ।




सः परिवारः वैविध्यमयं, दर्शनकुतूहल-
वर्धकम्, आसक्तिजनकं, विनोदस्थानोपेतं स्थलम् अगच्छत् ।
चित्रं सावधानतया पश्यन्तु । एतच्च दृश्यं कुत्रत्यम् इति ऊहां
कुर्वन्तु । चित्रस्य कश्चन भागः भवतां वर्णयोजनं प्रतीक्षते ।
तदपि कुर्वन्तु अविलम्बेन ।
VIVA O CARNAVAL
POLICE
VIVA O CARNAVAL

मासः अतीतप्रायः । ते गृहं प्रत्यागताः । तथापि तेषां प्रवासः तु न समाप्तः । पिता तान् कार्यानेन कुत्रापि नीतवान् । गमनसमये सः उक्तवान् – ''भवतां गृहस्य समीपे स्थितम् एकं विशेषं दर्शयितुम् इच्छामि । तत् तु भवद्भिः दृष्टपूर्वं न, किन्तु अवश्यं द्रष्टव्यं तत्'' इति । किन्तु तस्य स्थलस्य नाम तु तेन न उक्तम् । अल्पे एव काले थानेजनपदस्य सीमाप्रदेशं प्राप्तवन्तः ते । तत्र तैः एकः लघुः वसतिप्रदेशः गतः । यावत् तेषां कार्यानं स्थगितं तावता तत्र निवसन्तः बहवः बालाः गणरूपेण आगत्य कार्यानं परितः स्थितवन्तः । ''एते वर्लीजनजातेः जनाः । महाराष्ट्रगुजरातयोः केषुचित् प्रदेशेषु वसन्ति एते'' इति उक्तवान् पिता । ततः सः तत्रत्येन केनचित् सह वार्तालापं कृतवान् । सः जनः एतान् एकं कुटीरं नीतवान् । तस्य कुटीरस्य भित्तिषु वर्णमयानि चित्राणि चित्रितानि आसन् । पिता तानि चित्राणि दर्शयन् उक्तवान् – ''एषा वर्लीचित्रकला इति उच्यते । अत्रत्यः चित्रनिर्माणक्रमः इदानीं जगति एव प्रसिद्धः अस्ति'' इति । तृषा तुहिनश्च तानि चित्राणि महता कुतूहलेन दृष्टवन्तौ । तेषु चित्रेषु तज्जातीयानां देवाः, पशवः, वृक्षाः इत्यादयः चित्रिताः आसन् । मृगया, कृषिकार्यम् इत्यादीनां निमित्तं गच्छतां, नृत्यतां च महिला-पुरुषादीनां चित्राणि अपि तेषु चित्रितानि आसन् । वर्लिजातीयाः चित्ररचनार्थं वर्णान् कूर्चान् च स्वयं निर्मान्ति । श्वेतवर्णः एकः एव चित्ररचनार्थम् उपयुज्यते तैः । जलेन मिश्रितेन तण्डुलचूर्णेन ते श्वेतवर्णं निर्मान्ति । ते त्र्यङ्गुलमितां कृशां शलाकां कूर्चत्वेन उपयुज्य चित्राणि रचयन्ति । अङ्गुल्यः त्रिकोणाकारेण चित्र्यन्ते तैः । हस्तपादादयः शलाकाकाराः भवन्ति ।

एषः भारतप्रवासः किं भवतां सन्तोषाय जातः ?

अहम् अस्माकम् एतं सन्तोषकरं विरामकालम् अधिकृत्य एकां कथां लेखिष्यामि ।



अहं तु वर्लीशैल्या चित्राणि रचयिष्यामि ।



भवन्तः एतयोः कतरं करिष्यन्ति ?



# इष्टा वधूः

कृष्णपुरे गोपालः नामः कृषकः निवसति स्म । सः कृषिकार्यं स्वयम् एव निर्वहन् आसीत् । आवश्यकतायां सत्याम् इतर-कृषकाणां साहाय्यम् अपि करोति स्म सः ।

गोपालस्य पुत्रीद्वयम् । ज्येष्ठपुत्री विवाहिता सती पतिगृहं गतवती आसीत् । द्वितीया पुत्री अपि विवाहवयस्का जाता आसीत् । यावच्छीघ्रं पुत्र्याः विवाहः निर्वर्तनीयः इति गोपालस्य पत्नी चिन्तयन्ती आसीत् ।

एकदा गोपालः शिवमन्दिरे भगवतः अभिषेकं कारयन् आसीत् । तावता कश्चन अश्वशकटः आगत्य मन्दिरस्य पुरतः अतिष्ठत् । शाकटिकः कश्चित् पृष्टवान् - "गोपालवर्यस्य गृहं कुत्र ?" इति ।

तदा एव बहिः आगतः गोपालः शाकटिकस्य वचनं श्रुतवान् । सः शाकटिकस्य समीपम् आगत्य - "अहमेव गोपालः ! कः विषयः ? वदतु" इति उक्तवान् ।

तदा कश्चित् शकटात् अवतीर्णवान् । सः मूल्यवन्ति वस्त्राणि धृतवान् आसीत् । कण्ठे सुवर्णाभरणं धृतवान् आसीत् । तस्य चतसृषु अङ्गुलीषु अपि अङ्गुलीयकानि आसन् । दर्शनात् प्रतिभाति स्म यत् सः महाधनिकः इति ।

गोपालं सम्यक् अवलोक्य सः पृष्टवान् - "रे गोपाल ! किं भवान् मां न अभिज्ञातवान् ?" इति ।

'रे' इति कथनपूर्वकं सम्बोधयन्तं तं धनिकं दृष्ट्वा आश्चर्यम् अनुभवन् क्षणाभ्यन्तरे तस्य अभिज्ञानं प्राप्य - "अरे मुकुन्द ! भवान्...!" इति अवदत् गोपालः ।

मुकुन्दः अङ्गीकारपूर्वकं मन्दहासं प्रकटितवान् । मुकुन्दः विंशतिवर्षेभ्यः पूर्वं तस्मिन्



ग्रामे निवसति स्म । विवाहोत्तरं रत्नपुरीस्थं श्वशुरगृहं प्रति तेन गन्तव्यम् अभवत् । श्वशुरः धनिकः आसीत् । मुकुन्दः अपि परिश्रमेण बहुधनं सम्पादितवान् । समीपवर्तिग्रामेषु तस्य विषये महान् आदरः आसीत् ।

महता प्रीत्या गोपालः मुकुन्दं स्वगृहं नीतवान् । पत्न्याः पुत्र्याः च परिचयं कारितवान् । उत्तमरीत्या सत्कारम् अपि कृतवान् । मुकुन्देन सह सम्भाषमाणः गोपालः अवदत् - ''विंशतिः वर्षाणि अतीतानि । तथापि माम् अविस्मृत्य मम गृहम् आगतवान् खलु भवान् ! कुचेलस्य गृहं प्रति श्रीकृष्णस्य आगमनम् इव जातम् । भवतः मेलनतः अहं नितरां सन्तुष्टः अस्मि । यद्यपि अहं निर्धनः, तथापि एतस्मिन् ग्रामे कश्चन प्रभावः अस्ति मम । अतः मम किमपि साहाय्यम् अपेक्षितं चेत् सूचयतु । अवश्यं करिष्यामि'' इति ।

तदा मुकुन्दः हसन् -''गोपाल, मम पुत्रद्वयम् । पुत्र्यः न सन्ति । द्वौ अपि पुत्रौ कृषिकार्यं कुरुतः । कृषिः अस्माकं षष्ठः प्राणः इव । सेवकाः सन्ति चेदपि पुत्रौ एव कृषिकार्यं निर्वहतः । मम पत्नी अपि गृहे एव स्थित्वा गृहकृत्यं निर्वहन्ती पशूनां पालनं चिन्तयति । भगवतः कृपया मम प्रथमस्नुषा अपि तादृशस्वभावयुता एव अस्ति । द्वितीयपुत्राय वधूः द्रष्टव्या इति समीपस्थं वसन्तपुरं प्रति प्रस्थितवान् आसम् । किन्तु इदानीं तत्र गमनस्य आवश्यकता नास्ति इति भाति । भवतः गृहम् आगत्य चिन्तितवान् यत् भवतः द्वितीया पुत्री वाणी मम स्नुषा भविष्यति चेत् सम्यक् इति । एषः सम्बन्धः मम पत्न्यै पुत्राय च निश्चयेन रोचेत इति अहं चिन्तयामि । अतः अहम् एतं विवाहप्रस्तावं कुर्वन् अस्मि । अग्रिमनिर्णयः भवतः'' इति अवदत् ।

एतत् श्रुत्वा अत्यन्तं हृष्टः गोपालः उक्तवान् - ''मम जीवने इतोऽप्युत्तमः सौभाग्यक्षणः भवितुं न अर्हति । किन्तु अहम् अधिकं यौतकं दातुं न शक्नोमि । यत्किञ्चित् तु दास्यामि एव'' इति ।

तदा मुकुन्दः स्नेहपूर्वकं गोपालस्य स्कन्धे हस्तं स्थापयन् - ''गोपाल ! भवता अज्ञातं किम् अस्ति मम जीवने ? अहमपि सामान्यः कृषिकः एव आसम् । जामातृरूपेण श्वशुरस्य गृहं गत्वा स्थितवान् । ते धनिकाः आसन् इत्यतः उत्तमरीत्या मम योगक्षेमं विचारितवन्तः । गृहसदस्येन सह इव मया सह



व्यवहृतवन्तः । व्यवहारे सम्भाषणे वा कदापि तैः रूक्षता न दर्शिता । वयम् अपि यौतकं स्वीकृत्य किं कुर्याम ? इदानीम् एव प्रभूतम् ऐश्वर्यम् अस्माकं समीपे अस्ति । स्नुषा कृषककुटुम्बे समरसा भवति चेत् पर्याप्तम् । तावत् एव इच्छामि अहम्'' इति उक्तवान् ।

प्रस्थानात् पूर्वं मुकुन्दः पुनः अवदत् - ''मम पत्नी पुत्रः च अचिरात् एव भवतः पुत्रीं द्रष्टुम् आगमिष्यतः । तदनन्तरं विवाहस्य मुहूर्तः निश्चेतव्यः'' इति । मुकुन्दं प्रेषयितुं यदा गोपालः बहिः आगतवान्, तदा वाटिकातः धावन्ती आगता वाणी मुकुन्दम् उक्तवती - ''किञ्चित्कालानन्तरं महती वृष्टिः भवेत् । अतः विलम्बेन भवतः प्रस्थानं वरम्'' इति ।

मुकुन्दः आकाशं पश्यन् - ''किं वदन्ती अस्ति भवती ? इदानीं तु तीक्ष्णः आतपः अस्ति । भवती वदति - वृष्टिः भवेत् इति । कथम् एतत् ?'' इति अपृच्छत् ।

वाणी मुकुन्दं पितरं च वाटिकां नीत्वा उक्तवती - ''अत्र पश्यताम् । पिपीलिकाः श्वेताण्डानि वहन्त्यः पङ्क्तिशः गच्छन्त्यः सन्ति । कुक्कुटः पक्षौ प्रसार्य शोषयन् अस्ति । मक्षिकाः इतस्ततः डयमानाः सन्ति । एतेषां सङ्केतानाम् अर्थः - सद्यःकाले वृष्टिः भवेत् इति'' इति ।

मुकुन्दः अनुक्षणम् अवदत् - ''साधु ! साधु ! भवती निश्चयेन मम गृहस्य स्नुषा भवितुम् अर्हति । भवत्याः श्वश्रूः निश्चयेन भवतीम् इच्छति'' इति ।

किञ्चित्कालानन्तरं महती वृष्टिः अभवत् । वाण्याः भविष्यवाणी सत्यत्वेन परिणता ।

गृहम् आगत्य मुकुन्दः पत्नीं प्रवृत्तं सर्वं निवेदितवान् । ततः तेन सह तस्य पत्नी, पुत्रः च वाणीं द्रष्टुम् आगतौ । द्वाभ्याम्

अपि सा अरोचत । द्वौ अपि परस्परं निर्णयं कृतवन्तौ – 'एषा एव स्नुषात्वेन आगच्छतु' इति । मुकुन्दस्य पत्नी वाणी अवदत् – ''मामेन सह ज्येष्ठः कनिष्ठः च मिलतः चेत् लाभः, उत अन्धः पङ्गुः च मिलतः चेत् लाभः ? भवती एतस्य उत्तरं दातुं समर्था चेत् निश्चयेन मम स्नुषा भविष्यति'' इति ।

अनुक्षणं वाणी उक्तवती – ''गोपालः एतेन लाभान्वितः भवति इति यदि विश्वासः अस्ति, तर्हि मामेन सह यस्यकस्यचिदपि मेलनेन अपि लाभः एव'' इति ।

मुकुन्दः वाण्याः उत्तरेण अत्यन्तं हृष्टः अभवत् । सः पुत्रम् उद्दिश्य – ''पुत्र, वाणी मह्यं नितराम् अरोचत । सा भवतः योग्या पत्नी भविष्यति'' इति उक्तवान् ।

तदा मुकुन्दस्य द्वितीयः पुत्रः वाणीम् अवदत् – ''नवग्रहेषु ज्येष्ठः अस्ति सूर्यः । कनिष्ठः अस्ति बुधः । अन्धः नाम शुक्रग्रहः । पङ्गुः नामः शनिः । यदा सूर्यः, बुधः, शुक्रः, शनिः च चन्द्रेण मिलन्ति तदा वर्षा भवति । अस्माकं ग्रहस्थितिः उत्तमा यदि स्यात् तर्हि एव एवं भवति । तदा कृष्यर्थं यावत् आवश्यकं तावत् वर्षा अपि भवति । गुरुग्रहे विश्वासं कृत्वा एव कृषकाः प्रतिवर्षं कृष्याः आरम्भं कुर्वन्ति । भवत्या युक्तम् उत्तरम् उक्तम् इत्यतः मया भवत्याः प्रशंसा कृता'' इति अवदत् ।

वाणी मन्दहासपूर्वकम् उक्तवती – ''एताः अनुभवाधारिताः सूक्तयः । एताः अवलम्ब्य निर्णयकरणम् अपि उचितं न'' इति ।

मुकुन्दस्य पत्नी वाण्याः कथनात् महान्तम् आनन्दं प्राप्तवती ! अनन्तरं कदाचित् मुकुन्दस्य द्वितीयपुत्रेण सह वाण्याः विवाहः सम्पन्नः ।

स्नुषां स्वगृहं नयन् मुकुन्दः गोपालम् अवदत् – ''योग्यां वधूं मम गृहं प्रति नयन् अस्मि । एतस्याः प्रवेशेन मम गृहम् इतोऽप्यधिकं समृद्धं भविष्यति । आकस्मिकतया भवतः मेलनं प्राप्य अहं नितराम् उपकृतः अभवम् । ततः छिन्नः आवयोः मैत्रीसम्बन्धः इदानीं पुनः विकसितः जातः'' इति ।



६२. अश्वमेधयागः

# महाभारतम्

युधिष्ठिरस्य राज्याभिषेकानन्तरं श्रीकृष्णः बहूनि दिनानि यावत् हस्तिनापुरे अतिथिरूपेण स्थितवान् । तदा सः पितरं वसुदेवं द्रष्टुम् अपेक्षितवान् । अतः सः सात्यकिना, सुभद्रया च सह द्वारकां प्रत्यागतवान् । वसुदेवः कृष्णद्वारा सर्वाः युद्धवार्ताः ज्ञात्वा दौहित्रस्य अभिमन्योः मृत्योः विषये दुःखं प्रकटितवान् ।

तन्मध्ये युधिष्ठिरः – 'अश्वमेधयागार्थम् अपेक्षितं धनम् आनेतुं हिमालयः गन्तव्यः' इति निश्चितवान् । पाण्डवाः सैन्यम् एकत्रीकृतवन्तः । ततः ते धृतराष्ट्रस्य, गान्धार्याः, कुन्त्याः च अनुमतिं प्राप्य हिमालयस्य दिशि प्रस्थितवन्तः । नदीः, अरण्यानि, पर्वतान् च अतिक्रम्य ते हिमालयं प्राप्तवन्तः । यत्र मरुत्तैः धनं परित्यक्तम् आसीत् तत्र एव ते शिबिराणि निर्माय स्थितवन्तः । आरात्रि जागरिताः सन्तः ते उपवासाचरणं कृतवन्तः । शिलानाम् उपरि उपविश्य रात्रिं यापितवन्तः । परेद्यवि शिवस्य, कुबेरस्य, मणिभद्रस्य च पूजां कृत्वा भूतेभ्यः बलिं समर्प्य निधिं बहिः निष्कासितवन्तः । तत्र बहुविधाः सुवर्णचषकाः, स्थालिकाः, कलशाः, शरावाः, आभरणानि च आसन् । सर्वाणि अपि सुवर्णेन निर्मितानि आसन् । तानि सर्वाणि नेतुम् असङ्ख्याकाः उष्ट्राः,





अश्वाः, वाहनानि, मनुष्याः च अपेक्षिताः अभवन् । अन्ते सर्वं स्वीकृत्य ते महता आनन्देन हस्तिनापुरम् आगतवन्तः ।

अश्वमेधयागस्य सज्जतायाः वार्तां ज्ञात्वा कृष्णः सात्यकिना, प्रद्युम्नेन च सह हस्तिनापुरं प्रति प्रस्थितवान् । तैः सह साम्बः, चारुधेष्णः, गदः, कृतवर्मा, सुभद्रा, बलरामादयः चापि प्रस्थिताः । धृतराष्ट्रः विदुरेण सह अग्रे आगत्य तेषां स्वागतं कृतवान् । अस्मिन् अवसरे कृष्णः युयुत्सोः गृहे स्थितवान् ।

तदा एव उत्तरा प्रसूतवती । किन्तु शिशुः रोदनम् एव न कृतवान् । निश्चलतया शयानः आसीत् सः । एतत् दृष्ट्वा सर्वेऽपि खिन्नाः अभवन् । 'कृष्णः तत्रः आह्वातव्यः' इति कुन्ती चिन्तयन्ती आसीत् । तावता एव कृष्णः सात्यकिना सह तत्र स्वयम् उपस्थितः अभवत् । कृष्णं दृष्ट्वा सुभद्रा, द्रौपदी इत्यादयः स्त्रियः रोदनम् आरब्धवत्यः ।

कुन्तीदेवी कृष्णं पश्यन्ती गद्गदितस्वरेण- "हे कृष्ण, भवता एव एषः शिशुः रक्षणीयः । अश्वत्थाम्ना प्रयुक्तेन अस्त्रेण भवतः भागिनेयस्य पुत्रः एषः निर्जीवरूपेण जन्म प्राप्तवान् अस्ति । कृपया एतं रक्षतु" इति उक्तवती ।

तथैव सुभद्रा, उत्तरा, द्रौपदी च कृष्णं निवेदितवत्यः । उत्तरा पुत्रस्य स्थितिं दृष्ट्वा एव मूर्च्छावस्थां प्राप्तवती आसीत् ।

कृष्णः स्वपादेन मृतशिशोः शरीरं स्पृष्टवान् । तदा शिशौ चैतन्यम् उत्पन्नम् । अनुक्षणं सर्वे प्रसन्नाः अभवन् । ब्राह्मणाः शिशुम् आशीर्वादेन अनुगृहीतवन्तः । पाण्डववंशस्य शिशुः उज्जीवितः आसीत् इत्यतः कृष्णः तस्य शिशोः नाम 'परीक्षित्' इति कृतवान् । परीक्षित् दिने दिने वर्धमानः आसीत् ।

यदा सः एकमासीयः अभवत् तदा पाण्डवाः हिमालयात् धनं स्वीकृत्य हस्तिनापुरं प्रति आगतवन्तः । तेषाम् आगमनवार्तां श्रुत्वा जनाः हस्तिनापुरं सुन्दरतया अलङ्कृतवन्तः । यादवाः सर्वे पाण्डवानां स्वागतार्थं गतवन्तः । सर्वत्र नृत्यं, गीतागानं च प्रचलति स्म । तदा एव पाण्डवाः हस्तिनापुरं प्रविष्टवन्तः । ते पौत्रजन्मवार्तां, मृतशिशोः कृष्णद्वारा उज्जीवनं च श्रुत्वा नितरां प्रसन्नाः अभवन् । ते मुक्तकण्ठेन कृष्णस्य अभिनन्दनं कृतवन्तः । तदनन्तरं युधिष्ठिरः व्यासस्य, कृष्णस्य च

अनुमतिं स्वीकृत्य अश्वमेधयागम् आरब्धवान् ।

चैत्रपूर्णिमायाः दिने युधिष्ठिरः अश्वमेधयागस्य दीक्षां स्वीकृतवान् । यागाश्वस्य चयनं सूतैः ब्राह्मणैः च मिलित्वा करणीयम् आसीत् । अनन्तरं सर्वेभ्यः देशेभ्यः अश्वः प्रेषणीयः आसीत् यागकर्त्रा । जगति सर्वत्र अश्वस्य भ्रमणं कारणीयम् आसीत् । यदा यागाश्वः प्रत्यागच्छति तदा यागस्य समापनं क्रियते ।

अश्वमेधयागस्य समये युधिष्ठिरः यागदीक्षायां भवति इत्यतः भीमः नकुलेन सह राज्यभारं कुर्यात् इति निश्चितम् । यागाश्वम् अनुसृत्य रक्षणार्थम् अर्जुनः गच्छेत् इति, सहदेवः च पारिवारिकदायित्वं निर्वहेत् इति च निश्चितम् । अश्वस्य रक्षकरूपेण प्रस्थितवन्तम् अर्जुनम् उद्दिश्य युधिष्ठिरः अवदत् - ''अर्जुन, यागाश्वम् अनुसृत्य गच्छतः भवतः पुरतः कोऽपि क्षत्रियः यदि युद्धोद्देशेन आगमिष्यति तर्हि भवान् शत्रुतां न प्रदर्शयतु । प्रत्युत यागे भागम् वोढुं निमन्त्रणं ददातु'' इति ।

युधिष्ठिरः यागदीक्षां स्वीकृत्य अश्वं विमुक्तवान् । अश्वस्य पृष्ठतः गाण्डीवधारी अर्जुनः प्रस्थितवान् । तत्र एकत्रिताः पौराः सर्वे अत्यन्तं प्रसन्नाः आसन् । याज्ञवल्क्यस्य कश्चन शिष्यः, यः अश्वपोषणं जानाति स्म, सः अपि अर्जुनेन सह प्रस्थितवान् । वेदज्ञाः केचन ब्राह्मणाः, केचन क्षत्रियाः चापि तेन अर्जुनेन सह आसन् । युद्धे पाण्डवैः या भूमिः जिता आसीत् तत्र सर्वत्र अश्वः सञ्चारं कृतवान् ।

यद्यपि युधिष्ठिरेण 'युद्धं न करोतु' इति कथितम् आसीत्, तथापि मार्गे कैश्चित् राजभिः सह अर्जुनेन अनन्यगतिकतया युद्धं करणीयम् आपतितम् । बहुषु स्थलेषु किरातैः





अश्वाः, वाहनानि, मनुष्याः च अपेक्षिताः अभवन् । अन्ते सर्वं स्वीकृत्य ते महता आनन्देन हस्तिनापुरम् आगतवन्तः ।

अश्वमेधयागस्य सज्जतायाः वार्तां ज्ञात्वा कृष्णः सात्यकिना, प्रद्युम्नेन च सह हस्तिनापुरं प्रति प्रस्थितवान् । तैः सह साम्बः, चारुधेष्णः, गदः, कृतवर्मा, सुभद्रा, बलरामादयः चापि प्रस्थिताः । धृतराष्ट्रः विदुरेण सह अग्रे आगत्य तेषां स्वागतं कृतवान् । अस्मिन् अवसरे कृष्णः युयुत्सोः गृहे स्थितवान् ।

तदा एव उत्तरा प्रसूतवती । किन्तु शिशुः रोदनम् एव न कृतवान् । निश्चलतया शयानः आसीत् सः । एतत् दृष्ट्वा सर्वेऽपि खिन्नाः अभवन् । 'कृष्णः तत्रः आह्वातव्यः' इति कुन्ती चिन्तयन्ती आसीत् । तावता एव कृष्णः सात्यकिना सह तत्र स्वयम् उपस्थितः अभवत् । कृष्णं दृष्ट्वा सुभद्रा, द्रौपदी इत्यादयः स्त्रियः रोदनम् आरब्धवत्यः ।

कुन्तीदेवी कृष्णं पश्यन्ती गद्गदितस्वरेण- "हे कृष्ण, भवता एव एषः शिशुः रक्षणीयः । अश्वत्थाम्ना प्रयुक्तेन अस्त्रेण भवतः भागिनेयस्य पुत्रः एषः निर्जीवरूपेण जन्म प्राप्तवान् अस्ति । कृपया एतं रक्षतु" इति उक्तवती ।

तथैव सुभद्रा, उत्तरा, द्रौपदी च कृष्णं निवेदितवत्यः । उत्तरा पुत्रस्य स्थितिं दृष्ट्वा एव मूर्च्छावस्थां प्राप्तवती आसीत् ।

कृष्णः स्वपादेन मृतशिशोः शरीरं स्पृष्टवान् । तदा शिशौ चैतन्यम् उत्पन्नम् । अनुक्षणं सर्वे प्रसन्नाः अभवन् । ब्राह्मणाः शिशुम् आशीर्वादेन अनुगृहीतवन्तः । पाण्डववंशस्य शिशुः उज्जीवितः आसीत् इत्यतः कृष्णः तस्य शिशोः नाम 'परीक्षित्' इति कृतवान् । परीक्षित् दिने दिने वर्धमानः आसीत् ।

यदा सः एकमासीयः अभवत् तदा पाण्डवाः हिमालयात् धनं स्वीकृत्य हस्तिनापुरं प्रति आगतवन्तः । तेषाम् आगमनवार्तां श्रुत्वा जनाः हस्तिनापुरं सुन्दरतया अलङ्कृतवन्तः । यादवाः सर्वे पाण्डवानां स्वागतार्थं गतवन्तः । सर्वत्र नृत्यं, गीतागानं च प्रचलति स्म । तदा एव पाण्डवाः हस्तिनापुरं प्रविष्टवन्तः । ते पौत्रजन्मवार्तां, मृतशिशोः कृष्णद्वारा उज्जीवनं च श्रुत्वा नितरां प्रसन्नाः अभवन् । ते मुक्तकण्ठेन कृष्णस्य अभिनन्दनं कृतवन्तः । तदनन्तरं युधिष्ठिरः व्यासस्य, कृष्णस्य च

अनुमतिं स्वीकृत्य अश्वमेधयागम् आरब्धवान् ।

चैत्रपूर्णिमायाः दिने युधिष्ठिरः अश्वमेधयागस्य दीक्षां स्वीकृतवान् । यागाश्वस्य चयनं सूतैः ब्राह्मणैः च मिलित्वा करणीयम् आसीत् । अनन्तरं सर्वेभ्यः देशेभ्यः अश्वः प्रेषणीयः आसीत् यागकर्त्रा । जगति सर्वत्र अश्वस्य भ्रमणं कारणीयम् आसीत् । यदा यागाश्वः प्रत्यागच्छति तदा यागस्य समापनं क्रियते ।

अश्वमेधयागस्य समये युधिष्ठिरः यागदीक्षायां भवति इत्यतः भीमः नकुलेन सह राज्यभारं कुर्यात् इति निश्चितम् । यागाश्वम् अनुसृत्य रक्षणार्थम् अर्जुनः गच्छेत् इति, सहदेवः च पारिवारिकदायित्वं निर्व्हेत् इति च निश्चितम् । अश्वस्य रक्षकरूपेण प्रस्थितवन्तम् अर्जुनम् उद्दिश्य युधिष्ठिरः अवदत् - ''अर्जुन, यागाश्वम् अनुसृत्य गच्छतः भवतः पुरतः कोऽपि क्षत्रियः यदि युद्धोद्देशेन आगमिष्यति तर्हि भवान् शत्रुतां न प्रदर्शयतु । प्रत्युत यागे भागम् वोढुं निमन्त्रणं ददातु'' इति ।

युधिष्ठिरः यागदीक्षां स्वीकृत्य अश्वं विमुक्तवान् । अश्वस्य पृष्ठतः गाण्डीवधारी अर्जुनः प्रस्थितवान् । तत्र एकत्रिताः पौराः सर्वे अत्यन्तं प्रसन्नाः आसन् । याज्ञवल्क्यस्य कश्चन शिष्यः, यः अश्वपोषणं जानाति स्म, सः अपि अर्जुनेन सह प्रस्थितवान् । वेदज्ञाः केचन ब्राह्मणाः, केचन क्षत्रियाः चापि तेन अर्जुनेन सह आसन् । युद्धे पाण्डवैः या भूमिः जिता आसीत् तत्र सर्वत्र अश्वः सञ्चारं कृतवान् ।

यद्यपि युधिष्ठिरेण 'युद्धं न करोतु' इति कथितम् आसीत्, तथापि मार्गे कैश्चित् राजभिः सह अर्जुनेन अनन्यगतिकतया युद्धं करणीयम् आपतितम् । बहुषु स्थलेषु किरातैः





यवनैः च सह युद्धं कृतवान् सः । अनेके आर्यक्षत्रियाः अपि अर्जुनं युद्धे सम्मुखीकृतवन्तः । तेषु सर्वेषु युद्धेषु अर्जुनस्य एव जयः अभवत् ।

महाभारतयुद्धकाले त्रिगर्तकम् अर्जुनः हतवान् आसीत् । अतः यागाश्वस्य पृष्ठतः अर्जुनः आगच्छन् अस्ति इति वार्तां ज्ञात्वा त्रिगर्तकस्य पुत्राः पौत्राः च यागाश्वं ग्रहीतुम् आगताः । अर्जुनः तैः सह स्नेहेन सम्भाषणं कर्तुं प्रयत्नं कृतवान् । किन्तु ते अर्जुनस्योपरि बाणवर्षणम् आरब्धवन्तः । अतः तेषां नायकेन सूर्यवर्मणा सह अर्जुनः युद्धं कृतवान् । तदा सः सूर्यवर्माणं, केतुधर्मं, धृतवर्माणं च हतवान् । इतरे वीराः शरणं गतवन्तः ।

एवम् एव प्राग्ज्योतिषपुरे भगदत्तस्य पुत्रं वज्रदत्तं पराजितवान् अर्जुनः । तस्य वधम् अकृत्वा सः अश्वमेधयागे भागं वोढुं निमन्त्रितवान् ।

तदनन्तरं सैन्धवैः सह अर्जुनः युद्धं कृतवान् । सर्वान् सैन्धवान् पराजितवान् सः । महाभारतयुद्धे अर्जुनद्वारा सैन्धवः हतः आसीत् । तस्य पत्नी दुश्शला धृतराष्ट्रस्य पुत्री । दुश्शलायाः पुत्रः सुरथः यागाश्वेन सह अर्जुनस्य आगमनवार्तां श्रुत्वा एव आत्महत्यां कृतवान् ।

अतः दुश्शला पौत्रम् एकस्मिन् रथे उपवेश्य अर्जुनस्य समीपम् आनीतवती । सा अर्जुनम् उद्दिश्य – ''एषः भवतः पौत्रः परीक्षित् इव अस्ति । एतं पश्यन् भवान् सैन्धवान् क्षाम्यतु । एतस्य पितामहः भवतां विषये द्रोहम् आचरितवान् स्यात् नाम । तदर्थं वयम् अपि खेदम् अनुभूतवन्तः स्मः एव । अतः इदानीं तं विषयं विस्मरतु भवान्'' इति अवदत् ।

तानि वचनानि श्रुत्वा अर्जुनः भगिनीं दुश्शलाम् प्रेम्णा आलिङ्ग्य स्नेहपूर्वकं तां, तस्याः पौत्रं च गृहं प्रतिप्रेष्य ततः अग्रे गतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं यागाश्वः मणिपुरं प्राप्तवान् । तदा बभ्रुवाहनः मणिपुरं शास्ति स्म । सः चित्राङ्गदार्जुनयोः पुत्रः आसीत् । 'पिता आगतवान् अस्ति' इति वार्तां श्रुत्वा सः पितरं द्रष्टुं कैश्चित् ब्राह्मणैः सह आगतवान् ।

पुत्रस्य व्यवहारेण क्रुद्धः अर्जुनः –''किं भवान् क्षत्रियः न ? अहम् अत्र अतिथिरूपेण

अस्त्रधारणं कृत्वा यागाश्वस्य रक्षणार्थम् आगतवान् अस्मि । यदि भवान् वीरः तर्हि अश्वं गृहीत्वा मया सह युद्धं करोतु । एवम् अकृत्वा मधुरवचनानि वक्तुम् आगतवान् खलु भवान् ? किं लज्जा न अनुभूयते भवता ?'' इति उक्तवान् ।

तदा तत्र आगता उलूपी पुत्रं बभ्रुवाहनम् अवदत् – ''पुत्र, अहम् एका नागवंशीया नारी अस्मि । भवतः माता अपि अस्मि । भवदीयः पिता युद्धमदे अस्ति । अतः भवान् युद्धं कृत्वा तं प्रसन्नं करोतु'' इति ।

एतेन बभ्रुवाहनस्य पौरुषं जागरितम् अभवत् । युद्धवेषं धृत्वा रथम् आरुह्य अर्जुनेन सह युद्धं कर्तुम् आगतवान् बभ्रुवाहनः । द्वयोः मध्ये घोरं युद्धं प्राचलत् । द्वौ अपि युद्धे मूर्च्छावस्थां प्राप्तवन्तौ । चित्राङ्गदा आगत्य मूर्च्छावस्थां गतवन्तौ पतिं पुत्रं च दृष्टवती । अतः सा रोदनम् आरब्धवती । किन्तु किञ्चित्कालानन्तरं बभ्रुवाहनः चेतनावस्थां प्राप्तवान् । अर्जुनस्य कारणतः रुदतीं मातरं दृष्ट्वा बभ्रुवाहनः पश्चात्तापपीडितः अभवत् । सः अनशनव्रतम् आरब्धवान् ।

तदा उलूपी तत्र आगत्य पुत्रम् उद्दिश्य – ''किं भवतः पिता भवतः कारणतः मृतः इति भावितवान् भवान् ? तं जेतुं कोऽपि न शक्नोति । अहं मम मायया तादृशं दृश्यं सृष्टवती । एतं मणिं स्वीकृत्य एतेन पितुः स्पर्शं कारयतु । सः झटिति उत्तिष्ठति'' इति उक्तवती । तदा बभ्रुवाहनः तथैव कृतवान् । मणेः स्पर्शकारणतः अर्जुनः चेतनावस्थां प्राप्तवान् । सः निद्रातः उत्तिष्ठन् इव उत्थाय



उपविष्टवान् । अर्जुनः बभ्रुवाहनम् आलिङ्गितवान् । सः उलूपीं चित्राङ्गदां च दृष्ट्वा प्रसन्नः अभवत् । सः ते द्वे उद्दिश्य पृष्टवान् – ''भवत्यौ युद्धक्षेत्रं कथम् आगतवत्यौ ?'' इति ।

उत्तररूपेण उलूपी अवदत् – ''आर्यपुत्र, भवान् अन्याय्यरूपेण भीष्मं मारितवान् । अतः भवान् पापभाक् अभवत् । तस्य पापस्य परिहारार्थं पुत्रद्वारा अहं भवतः मरणं कारितवती'' इति । उलूप्याः वचनेन अर्जुनः प्रसन्नः अभवत् । सः अश्वमेधयागे भागं वोढुं बभ्रुवाहनं निमन्त्रितवान् । बभ्रुवाहनः पितरं निवेदितवान् यत् एकरात्रं यावत् अस्माकम् अतिथिः भूत्वा भवान् तिष्ठतु इति । किन्तु 'अश्वेन सह गमनम् अनिवार्यम्' इति उक्त्वा अर्जुनः तत्र वासं निराकृतवान् ।

यागाश्वः समुद्रतीरं यावत् गत्वा इन्द्रप्रस्थस्य दिशि प्रस्थितवान् । सः अश्वः अनेकेषु देशेषु अटनं कृत्वा मगधराजधानीं राजगृहं प्राप्तवान् । तत्रत्यः राजा मगधसन्धिः अर्जुनेन सह युद्धं कृत्वा पराजयं प्राप्तवान् ।

तस्य युद्धकौशलं दृष्ट्वा नितरां प्रसन्नः अर्जुनः –"भवान् अल्पवयस्कः सन् अपि उत्तमरीत्या युद्धं कृतवान् । अतः भवन्तं हन्तुं न इच्छामि अहम् । आगामिपौर्णिमायाः दिने मम अग्रजः युधिष्ठिरः अश्वमेधयागं करिष्यति । भवता अवश्यं तत्र भागः वोढव्यः" इति अवदत् ।

एवम् अर्जुनः अश्वस्य पृष्ठतः गच्छन् म्लेच्छैः, निषाधैः, शकुनेः पुत्रैः, गान्धारराजेन, द्रविडैः, आन्ध्रैः, ओढ्रैः च सह युद्धं कृत्वा विजयी भूत्वा हस्तिनापुरं प्रत्यागतवान् । तदा चैत्रपूर्णिमा सन्निहिता आसीत् । हस्तिनापुरे मासात् पूर्वमेव यागस्य सज्जताः आरब्धाः आसन् ।

यागसमये असङ्ख्याकाः जनाः सम्मिलिताः आसन् । तेषु अनेके वेदविदः राजानः आसन् । कृष्णबलरामौ सात्यकिना, प्रद्युम्नेन, साम्बेन, कृतवर्मणा, इतरप्रमुखयादवैः च सह आगतवन्तौ आस्ताम् । चित्राङ्गदया, उलूप्या च सह बभ्रुवाहनः अपि यागे भागं वोढुम् आगतवान् ।

निश्चिते समये यागस्य आरम्भः वैभवेन सम्पन्नः । युधिष्ठिरः यागार्थम् आगतेभ्यः सर्वेभ्यः उपायनानि दत्तवान् । सर्वे यागं प्रशंसितवन्तः । युधिष्ठिरस्य दानविषये अपि सर्वे श्लाघनं कृतवन्तः ।

तदा एव तत्र कश्चन नकुलः आगत्य – "भवन्तः एतस्य यागस्य श्लाघनं कुर्वन्तः श्रान्ताः इति भाति । मधुकरवृत्त्या जीवनं कुर्वाणः कुरुक्षेत्रनिवासी कश्चित् मुनिः यत् दानं कृतवान् तत् एतस्मात् अपि अतिश्रेष्ठतरम् आसीत्" इति उक्तवान् ।

नकुलस्य वचनं श्रुत्वा सर्वे आश्चर्यचकिताः अभवन् । ते सर्वे पृष्टवन्तः – "कः भवान् ? कुतः आगतं भवता ? शास्त्रानुसारम् एषः यागः सम्पन्नः । अत्र का त्रुटिः दृष्टा भवता ? सत्यं वदतु भवान्" इति ।



विरामदिनानि
उपयुज्यन्ताम्
पारितोषिकप्राप्त्यर्थम्

नवम्बर् - २००१ सञ्चिकायाः निर्माणे

साहाय्यार्थं निमन्त्र्यन्ते बालाः

**किशोरलेखकाः निमन्त्र्यन्ते** - ३००-५०० शब्दैः युक्ताः आकर्षकशीर्षकयुक्ताः कथाः, विनोदकणिकाः, प्रहेलिकाः, कूटप्रश्नाः इत्यादयः प्रेषणीयाः इति । ते च आंग्लभाषया, हिन्दीभाषया, बङ्गालीभाषया, ओरियाभाषया, मराठीभाषया, गुजरातीभाषया, तेलुगुभाषया, कन्नडभाषया, तमिलुभाषया, मलयालभाषया वा रचिताः स्युः । त्रयः विषयाः प्रेषयितुं शक्याः । भवतां मित्रं चित्रलेखकः चेत् तम् अपि वदन्तु - चित्रं प्रेषयतु इति । तेन प्रेषितानि चित्राणि उत्तमानि चेत् चेन्नैनगरं प्रति आगच्छतु इति सः सूच्यते (व्ययः अस्माभिः निरुह्यते) अन्तिमरूपदानाय ।

**किशोरकलाकाराः निमन्त्र्यन्ते** - भारतस्य इतिहासं पुराणादिकं च अधिकृत्य रचितानि त्रीणि चित्राणि (विवरणानि अक्षरैः लेखनीयानि) प्रेषयितुं शक्यानि । येषां चित्रम् अस्माकं तृप्त्यै भवति ते चेन्नैनगरं प्रति निमन्त्र्यन्ते चितानां कथानां कृते चित्रलेखनाय ।

**अन्तिमः दिनाङ्कः** - जून् ७, २००१

**पुरस्कारः** - अपूर्वाणां प्रयत्नानां निमित्तम् आकर्षकाः पुरस्काराः ।

**भावचित्रम्** - चित्रकथादिभिः सह भवतां लघुभावचित्रम् अपि प्रेषयन्तु ।

नाम ..................................... वयः / जन्मदिनाङ्कः ..................

कक्ष्या .......... विद्यालयनाम ..................................................

गृहसङ्केतः ..........................................................................

..........................................................................

..........................................................................

.......................................................... पिन्कोड् ..................

प्रेषितानां विवरणम् -

१. ..................................................

२. ..................................................

३. ..................................................

अहम् अत्र प्रमाणीकरोमि यत् एतेन सह प्रेष्यमाणाः लेखाः / प्रेष्यमाणानि चित्राणि मम पुत्रेण / पुत्र्या स्वयं रचिताः / रचितानि । चितायाः कृतेः उपयोगः ययाकयाचिदपि भाषया, मुद्रणमाध्यमेन, इलेक्ट्रानिक्स्माध्यमेन, अन्यमाध्यमेन वा कर्तुं मम अनुमतिः अस्ति, तस्याः स्वाम्यं चन्दमामा एव अर्हति ।

*भागग्राहिणः हस्ताक्षरम्* *पोषकस्य हस्ताक्षरम्*



# पुत्रस्य दायित्वम्

देवसेनः श्रीधरपुरस्य राजा । स धर्मनिष्ठः, अनुभवी राजनीतिज्ञः च । तस्मिन् जनानां महान् आदरः आसीत् । विनीतसेनः तस्य पुत्रः । सः क्षत्रियोचितविद्यासु प्रवीणः आसीत् । सः बुद्धिमान् विवेकी च । अतः देवसेनः शीघ्रमेव पुत्रे राज्यभारं निक्षेप्तुम् इच्छति स्म । तथापि सः पुत्रस्य शासनपद्धतिं व्यवहारशैलीं च परीक्षितुम् इच्छति स्म । एकदा देवसेनः पुत्रं राज्यसभाम् अनयत् । यदा देवसेनः सिंहासने उपविष्टवान् तदा मन्त्री तम् उद्दिश्य - ''महाराज ! भवतः दर्शनार्थम् एका माता, तस्याः पुत्रः च आगतवन्तौ'' इति उक्तवान् ।

देवसेनः राजसभाम् आगन्तुं तयोः अनुमतिं दत्तवान् । माता सीता, पुत्रः गोविन्दः च सभाम् आगतवन्तौ ।

राजा तौ उद्दिश्य - ''भवन्तौ किं वक्तुम् इच्छतः ? भवतोः का समस्या ?'' इति पृष्टवान् ।

गोविन्दः अवदत् - ''प्रभो, वयं निर्धनाः । परिश्रमेण प्राप्तेन धनेन एव जीवननिर्वहणं करणीयम् । मम त्रयः पुत्राः सन्ति । अहं मम पत्नी च बहु परिश्रमं कुर्वः । तथापि कुटुम्बपोषणे कष्टम् अनुभवावः । एवं स्थिते एतस्याः वृद्धायाः योगक्षेमनिर्वहणं कथं कर्तुं शक्येत ? न केवलं तावत्, एतस्याः सर्वदा अस्वास्थ्यं भवति । सर्वदा 'उदरवेदना' 'शिरोवेदना' इत्यादिरूपेण वदन्ती भवति एषा । सर्वदा एतस्याः सेवां कर्तुं वयं न शक्नुमः । निर्धनः अहम् एतस्याः चिकित्सां कथं कारयितुं शक्नोमि ? अतः अहम् एतां वदामि - 'वृद्धाश्रमं प्रविशतु' इति । किन्तु एषा वृद्धा निराकुर्वती अस्ति । भवान् कृपया अङ्गीकारयतु । अतः भवतः सम्मुखम् आगतवान् अस्मि'' इति ।

तदा माता सीता उक्तवती - ''महाराज, भवान् मातृहृदयस्य कष्टम् अवगच्छति इति भावयामि । शरीरे यावत् बलम् आसीत् तावत् कार्यं करोमि स्म । अहम् इदानीं वृद्धा अभवम् । मम शरीरम् इदानीं दुर्बलं जातम्

'भामहः'

अस्ति । कार्यं किमपि कर्तुं न शक्नोमि । यद्यपि मम पुत्रः, स्नुषा, पौत्राः च सन्ति, तथापि अहम् अनाथा अस्मि । वृद्धाश्रमं गच्छतु इति एते अनुरोधं कुर्वन्तः सन्ति । एतस्य श्रवणेन एव मम प्राणाः निर्गच्छन्तः सन्ति इव । भवान् एव वदतु - मया किं करणीयम् इति'' इति ।

देवसेनः द्वयोः वचनं ध्यानपूर्वकं श्रुतवान् । पार्श्वे उपविष्टः पुत्रः अपि श्रद्धया शृण्वन् चिन्तयन् आसीत् । सः निर्निमेषदृष्ट्या गोविन्दं, तस्य मातरं च पश्यन् आसीत् ।

राजा विनीतसेनस्य कर्णे मन्दस्वरेण - ''एतस्य विवादस्य परिहारः कथम् ? अहम् अवगन्तुं न शक्तः । भवान् एव विचिन्त्य समस्यां परिहरतु'' इति अवदत् ।

विनीतसेनः पितरम् अवदत् - ''अवगन्तुम् अयोग्यः कः विषयः अत्र अस्ति ? गोविन्देन उक्तम् अपि सत्यम् । स्वस्य आर्थिकस्थितिं मनसि निधाय सः चिन्तामग्नः अस्ति । अनन्यगतिकः सन् सः तथा वदन् अस्ति'' इति । अनन्तरं सः गोविन्दम् उद्दिश्य - ''भवान् सुशिक्षितः इव भाति । कस्मिंश्चित् अपि ग्रन्थे आजीवनं मातापित्रोः पालनपोषणं पुत्रेण करणीयम् इति लिखितम् अस्ति किम् ?'' इति अपृच्छत् ।

तदा गोविन्दः दृढस्वरेण - ''नास्ति प्रभो ! एवं कुत्रापि उल्लिखितं नास्ति । वयं लोके विविधान् पक्षिणः पश्यामः । यावत् शावकानां पक्षौ डयनसामर्थ्यं न प्राप्नुतः तावत् मातापितरौ शावकान् पोषयन्ति । डयनसामर्थ्यं प्राप्य यदा ते उड्डीय गच्छन्ति तदा मातापितरौ स्वयोगक्षेमविषये आत्मनिर्भराः भवन्ति ।



शावकान् एवं तु न वदन्ति यत् - अद्यपर्यन्तं भवतां पालनपोषणं वयं कृतवन्तः । अतः इतःपरम् अस्माकं योगक्षेमदायित्वं भवताम् इति'' इति अवदत् ।

तदा विनीतः अवदत् - ''सत्यमुक्तं भवता । किन्तु गोविन्द ! मम कश्चन सन्देहः अस्ति'' इति ।

विनीतसेनः मम समर्थनं कुर्वन् अस्ति इति भावयन् गोविन्दः उत्साहपूर्णस्वरेण अवदत् - ''पृच्छतु महाप्रभो'' इति ।

तदा विनीतसेनः पृष्टवान् - ''भवान् मनुष्यः उत पशुः पक्षी वा ? सम्यक् विचिन्त्य उत्तरं वदतु'' इति ।

गोविन्दः भयम् अनुभवन् - ''अहं मनुष्यः एव श्रीमन्'' इति अवदत् ।

तदा विनीतसेनः - ''भवान् आत्मानं यदि मनुष्यं भावयति तर्हि आदरपूर्वकं स्वमातरं गृहं नयतु । प्राणिषु मनुष्यजीवनं न केवलम् उत्तमम्, अपि तु अत्यन्तं श्रेष्ठम् अस्ति । बहुवारं प्रत्युपकारस्य अपेक्षां विना एव मनुष्यः इतरेषां साहाय्यं करोति । कष्टकाले सहभागी भवति । माता भवतः निमित्तम् अनेकानि कष्टानि सोढवती । पालन-पोषणादिकं कृत्वा भवन्तं वर्धितवती । तादृश्याः जनन्याः तिरस्कारः पापकरः । एतस्मात् पापकार्यात् आत्मानं रक्षतु । सत्यं किम् इति अवगच्छतु । कर्तव्यं किम् इति जानातु'' इति अवदत् ।

विनीतसेनस्य वचनानि श्रुत्वा गोविन्दस्य हृदये स्पन्दनम् आरब्धम् । स्वस्य दोषम् अवगत्य पश्चात्तापपूर्णेन स्वरेण सः - ''अम्ब, पापी अहम् । मां क्षाम्यतु कृपया'' इति वदन् मातुः पादे मस्तकं स्थापितवान् ।

गोविन्दस्य माता पुत्रं, विनीतसेनं च उद्दिश्य - ''दीर्घायुष्मान् भव'' इति आशीर्वादं कृतवती ।

पुत्रस्य विनीतसेनस्य निर्णयं श्रुत्वा राजा अत्यन्तं सन्तुष्टः अभवत् । प्रज्ञावान् मम पुत्रः सूक्ष्मधर्मान् सम्यक् जानाति इति अवगतम् आसीत् देवसेनेन । एतस्याः घटनायाः अनन्तरं सः पुत्रे राज्यभारं निक्षिप्तवान् ।



चन्दमामाप्रस्तुतिः

# अजेयः गरुडः

*कला* - पाणिः

न्द्रपुरीराज्ये दीर्घकालं यावत् शान्तिः सुव्यवस्था च आसीत् । वृद्धमन्त्रिणः आकस्मिकमरणस्य अनन्तरं राजा महेन्द्रदेवः मन्त्रिपुत्रम् आदित्यन् आस्थानिकेषु अन्यतमं कृतवान् । जनान् बहुधा पीडयतां लुण्ठाकानां ग्रहणे सेनापतिः नरेन्द्रदेवः असफलः जातः । अतः राजा एतत् कार्यम् आदित्याय अर्पितवान् । आदित्यः लुण्ठाक प्रथमप्रयत्नेन एव गृहीतवान् । कारागारं प्रति गच्छत्सु लुण्ठाकेषु कश्चित् अभिज्ञातवान् आदित्यः । तस्य नाम आसीत् मसिंहः इति ।

आदित्यः प्रकोष्ठे उपविश्य चिन्तने मग्नः जातः । रामसिंहस्य शब्दाः तस्य मस्तिष्के गुञ्जन्ति स्म ।

किं मया जनानाम् अहितम् आचरितम् ? किमर्थं रामसिंहः तथा उक्तवान् ?

एकः अङ्गरक्षकः अन्तः आगच्छति ।

श्रीमन् ! काचित् महिला भवन्तं द्रष्टुम् इच्छति ।

तम् अन्तः प्रेषयतु ।

यदा सा युवतिः अन्तः आगता तदा आदित्यः आसनात् उत्थितवान् ।

मम नाम अरुणा ।

आदित्यः किञ्चन आसनं दर्शितवान् ।

अरुणा !!

कृपया उपविश्यताम् ।


अहं कस्मिंश्चित् आश्रमे पठामि स्म इति भवती जानाति इति मन्ये । मम पितुः मरणस्य अनन्तरम् अहं प्रत्यानीतः अत्रत्यैः ।
आं, मया ज्ञायते एतत् । किन्तु भवान् कदाचित् न जानीयात् यत् भवतः पिता यद्दिने दिवङ्गतः तस्मिन् एव दिने मम पिता अपि दिवं गतः इति । भवतः पितुः, मम पितुः च महती मैत्री आसीत् । तौ बहुधा चतुरङ्गं क्रीडतः स्म ।
एवम् ! बाढम् ।


कदाचित् अहम् अपि ताभ्यां सह भवामि स्म । भवतः पिता, मम पिता च पठनार्थं पुस्तकानि यच्छतः स्म । तेषु आयुर्वेदपुस्तकानि अपि अन्यतमानि भवन्ति स्म ।


तस्यां रात्रौ अपि तौ चतुरङ्गं क्रीडितवन्तौ । अल्पे एव काले भवतः पिता मह्यं वार्तां प्रेषितवान् यत् विष-निरोधकम् औषधम् आनयतु इति ।


किन्तु यावत् अहं तत्र गता तावता विलम्बः जातः आसीत् ।
















आदित्यः तस्याः हस्ततः ताडपत्रं स्वीकृत्य पठितवान् ।...






तेन एतदपि उक्तम् आसीत् यत्...
एतत्सर्वम् अन्यः न वक्तव्यः इति ।


आदित्यः स्वदुःखं गोपयितुं प्रयत्नं कृतवान् । सः विषय-परिवर्तनं कृतवान् ।


किं मम पिता चतुरङ्गे निपुणः आसीत् ?


भवतः पिता मत्पिता च तत्र समानौ आस्ताम् ।


तस्यां रात्रौ अन्यत् किं किं प्रवृत्तम् ?


सः हस्तसङ्केतेन एकां पेटिकां दर्शितवान् । सा च मया नीता आसीत् । सा आनीता अस्ति मया ।


आदित्यः पेटिकाम् उद्घाटितवान् । ततः एकं पुस्तकं प्राप्तं तेन ।




अहो ! एतत् समग्रं मम पित्रा स्वहस्ताक्षरैः एव लिखितम् ।
आदित्यः पुस्तकपठने निमग्नः जातः ।


अस्माकं राज्यस्य रक्षकाय गरुडाय नमः । गरुडस्य, तन्मातुः विनतायाः च ललाटे लिखितम् आसीत् यत् कद्रोः तत्पुत्राणां नागानां च पीडा अनुभोक्तव्या इति । कदाचित् नागाः प्रयाणकाले गरुडस्य पृष्ठतः पतिताः । एतस्मात् ते नितरां क्रुद्धाः ।
- (अनुवर्तते)



# सावधानता

सोमनाथस्य कुटुम्बम् अत्यन्तं लघु। सोमनाथः, तदीया पत्नी, पुत्रः, पुत्री च तत्र वसन्ति स्म । सोमनाथस्य पत्नी कुसुमा स्वभावेन अत्यन्तं कोमला आसीत् । पत्युः वचनानि कदापि न निराकरोति स्म सा । तयोः पुत्रः राजपुरे पठति स्म । पुत्री मालती विवाहयोग्या जाता आसीत् ।

एकदा गृहविषये सोमनाथः कुसुमया सह वार्तालापं कुर्वन् आसीत् । तदा कुसुमा पतिम् उक्तवती – ''पुत्रस्य अध्ययनार्थं नगरे व्यवस्था करणीया चेत् अस्माभिः सञ्चयः करणीयः भवेत् । व्ययः नियन्त्रणीयः भवेत्'' इति ।

सोमनाथः पत्नीं – ''भवादृशी पत्नी अस्ति चेत् व्ययनियन्त्रणे किं कष्टम् ?'' इति प्रशंसापूर्वकम् उक्तवान् ।

तदा एव तत्र भैरवः आगतवान् । भैरवः गोविन्दपुरस्य निवासी । गोविन्दपुरे सोमनाथस्य दश-एकरमिता कृषिभूमिः आसीत् । भैरवः एव तस्याः भूमेः निर्वहणं करोति स्म । प्रतिवर्षं यत् धान्यं लभ्यते तत् विक्रीय सोमनाथाय ददाति स्म सः । तस्मात् एकभागं भैरवः स्वीकरोति स्म ।

भैरवः सोमनाथम् उद्दिश्य – ''स्वामिन्, वयम् अत्यन्तं भाग्यशालिनः स्मः । यतः अस्मिन् वर्षे धान्यं समृद्धं भवेत् इति निरीक्षा अस्ति । अस्मत्तः ये ऋणं प्राप्तवन्तः आसन् तेऽपि प्रत्यर्पितवन्तः सन्ति । मासाभ्यन्तरे पुनः पञ्चसहस्रं रूप्यकाणि भवते समर्पयिष्यामि'' इति उक्तवान् ।

कुसुमा – ''भैरव, अद्य भवता शुभवार्ता श्राविता । अतः अस्माकं गृहे भोजनं कृत्वा एव गन्तव्यं भवता'' इति प्रेम्णा उक्तवती ।

तदा भैरवः – ''नास्ति अम्ब ! अद्य किञ्चित् महत्त्वयुतं कार्यं मनसि निधाय

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



आगतवान् अस्मि । मम पुत्र्याः विवाहः निश्चितः । द्विसहस्ररूप्यकाणां कश्चन हारः कारणीयः अस्ति । मासाभ्यन्तरे अहं भवतां धनम्, ऋणं च आनीय दास्यामि । अतः कृपया मह्यम् ऋणं ददातु'' इति अवदत् ।

भैरवः विश्वासार्हः आसीत् । प्राणापायस्थितौ अपि सः दत्तं वचनं न विस्मरति स्म । अतः तस्मै ऋणं दातुं तयोः दम्पत्योः कोऽपि आक्षेपः न आसीत् । किन्तु तस्मिन् समये गृहव्ययार्थं केवलानि द्विशतरूप्यकाणि सोमनाथस्य समीपे आसन् ।

कुसुमा पत्युः द्वैधीभावस्थितिम् अवगत्य संज्ञया तम् अन्तः आहूय अवदत् - ''भैरवस्य आवश्यकता सकारणा अस्ति । कुतश्चित् ऋणं स्वीकृत्य वा तस्य आवश्यकता अस्माभिः पूरणीया । तस्य कष्टकाले साहाय्यकरणम् अस्माकं कर्तव्यम्'' इति ।

द्वौ अपि 'ऋणं कुतः प्राप्तव्यम्' इति चिन्तनम् आरब्धवन्तौ । तदा अकस्मात् कुसुमा विष्णुं स्मृतवती । विष्णुः कुतश्चित् पञ्चदशसहस्रं रूप्यकाणि प्राप्तवान् अस्ति इति किंवदन्ती प्रसृता आसीत् ।

तत् स्मरन्ती कुसुमा उक्तवती - ''पुत्री कौशेयनिचोलं इच्छन्ती अस्ति । पुत्रः अपि रजताङ्गुलीयकम् अपेक्षते । तयोः अपेक्षा अपि अस्माभिः पूरणीया खलु ? विष्णोः समीपे यदि ऋणं प्रार्थ्येत तर्हि सः न निराकुर्यात् । ऋणं स्वीकरणीयमेव चेत् पञ्चसहस्रं प्रार्थयतु'' इति ।

सोमनाथः पत्न्याः प्रस्तावम् अङ्गीकृतवान् । तन्मध्ये भैरवः स्वर्णकारस्य समीपम् अगच्छत् । सोमनाथः विष्णोः गृहं गतवान् । विष्णुः बहिः आगत्य यदा दृष्टवान् तदा तं द्रष्टुं बहवः तत्र आगत्य उपविष्टवन्तः

आसन् । सः चिन्तितवान् यत् सर्वे ऋणं प्राप्तुम् आगतवन्तः सन्ति' इति । अतः सर्वान् अपि पश्यन् सः अवदत् - ''धनार्जनं व्ययीकरणतः अपि कष्टकरम् । किन्तु यदा व्यक्तेः समीपे धनं भवति तदा सः एतम् अंशं विस्मरति । अतः व्ययः मा भवतु इति आशया अहं सर्वं धनं कुसीदवणिजे सुन्दराय अर्पयामि । सः प्रतिमासं मह्यं वृद्धिं ददाति । एतदर्थं मया प्रतिभूत्वम् अपि दातव्यं न भवति । मम यदि धनस्य आवश्यकता भवति तर्हि अहम् अपि ऋणं स्वीकरोमि । तदर्थम् अहं न्यूनां वृद्धिं ददामि । सः इतरेभ्यः यत् ऋणं ददाति तस्य वृद्धिः किञ्चित् अधिका भवति । तेन सुन्दरः अपि किञ्चित्प्रमाणेन लाभान्वितः भवेत् । अनावश्यकः व्ययः मा भवतु इति उद्देशेन मया एवं कृतम्'' इति ।

'स्वस्य धनं कस्मैचित् समर्प्य तस्मात् एव यः ऋणं स्वीकरोति तादृशात् वयं कां ऋणप्राप्तिनिरीक्षां कर्तुं शक्नुयाम' इति चिन्तयन्तः जनाः मन्दतया एकैकशः ततः प्रतिगतवन्तः ।

सोमनाथं विष्णुः सम्यक् जानाति स्म । उभयोः अपि मैत्री दृढा आसीत् । अतः विष्णुः सोमनाथस्य सङ्कोच-प्रवृत्तिम् अवगत्य अवदत् - ''आवां स्नेहितौ । भवान् मत्तः किमपि गोपयन् अस्ति इति भाति । चलतु । द्वौ अपि सुन्दरसमीपं गच्छाव । वर्षस्य पञ्चदशप्रतिशतमितायाः वृद्धेः दानम् अङ्गीकृत्य ऋणं स्वीकर्तुं शक्यते । अहम् इदानीं सहस्रमितम् ऋणं भवते दापयितुं शक्नोमि । मयि विश्वस्य मया सह चलतु । भवते कियत् ऋणम् आवश्यकम् इति वदतु'' इति उक्तवान् ।

प्रतिशतं पञ्चदशरूप्यकाणि वृद्धिरूपेण दातव्यानि भवन्ति इति स्मरणेन एव सोम-नाथस्य हृदयगतिः अधिका जाता । तस्य मुखात् शब्दाः न निस्सृताः । बहुधा विचिन्त्य



सः कथञ्चित् अवदत् - ''मह्यं केवलं द्विसहस्त्रं रूप्यकाणि ऋणरूपेण अपेक्षितानि'' इति ।

उभौ अपि सुन्दरसमीपं गतवन्तौ । सोमनाथस्य सम्मुखे एव विष्णुः सुन्दराय पञ्चदशसहस्त्रं रूप्यकाणि दत्तवान् । सुन्दरः प्राप्तिपत्रं विष्णवे यच्छन् - ''प्रतिशतं त्रयोदशरूप्यकाणि वृद्धिरूपेण भवते प्रतिवर्षं दास्यामि'' इति अवदत् ।

सुन्दरस्य नियमानुसारं सोमनाथः तस्मात् द्विसहस्त्रं रूप्यकाणि ऋणरूपेण स्वीकृतवान् । धनं यच्छन् सुन्दरः - ''सामान्यतः सर्वेभ्यः अहं विंशतिप्रतिशतमितां वृद्धिं स्वीकरोमि । किन्तु यस्य धनं मम समीपे सुरक्षितम् अस्ति तस्मात् अहं त्रयोदशप्रतिशतमिताम् एव वृद्धिं स्वीकरोमि'' इति उक्त्वा ऋणपत्रस्य उपरि हस्ताङ्कनं कारयित्वा द्विसहस्त्रं रूप्यकाणि सोमनाथाय दत्तवान् ।

सोमनाथः मनसि एव दुःखम् अनुभवन् आसीत् । किन्तु किमपि कर्तुं न शक्नोति स्म सः । विष्णुः आत्मीयमित्रम् इति वदन् अधिकवृद्ध्या एव ऋणं दापितवान् । स्वस्य परिस्थितिं दृष्ट्वा खेदम् अनुभवन् एव सः द्विसहस्त्रं रूप्यकाणि भैरवाय दत्तवान् । मासाभ्यन्तरे एव भैरवः सोमनाथस्य धनं, स्वस्य ऋणं च प्रत्यर्पितवान् । वृद्धिसहितानि द्विसहस्त्रं रूप्यकाणि स्वीकृत्य सोमनाथः यदा विष्णोः गृहं गतवान् तदा विष्णुः - ''किं भोः, मां कुसीदवणिजं भावितवान् भवान् ? किं मया मित्रात् अपि भवतः वृद्धिः स्वीकरणीया ?'' इति वदन् द्विसहस्त्रं रूप्यकाणि एव स्वीकृतवान् ।

सोमनाथः आश्चर्यचकितः अभवत् । तेन तदा अवगतं यत् ऋणस्वीकरणेन यानि कष्टानि अनुभवितव्यानि भवन्ति तानि ज्ञापयितुम् एव विष्णुः सुन्दरसमीपं मां नीतवान् आसीत्, अधिकवृद्ध्यर्थं न इति ।

'विष्णुः एवं यदि न अकरिष्यत् तर्हि अहं पत्न्याः कथनानुसारं पञ्चसहस्त्रं रूप्यकाणि ऋणरूपेण स्व्यकरिष्यम् । तस्य धनस्य व्ययः अपि अभविष्यत् । विष्णुना अहं जागरितः' इति चिन्तयन् सोमनाथः विष्णुविषये कृतज्ञताभावम् अवहत् ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

मूल्याङ्कसङ्ग्रहस्य, नाणकसङ्ग्रहस्य च अभ्यासः भवतु बहूनां स्यादेव । अतः अधोलिखितानां प्रश्नानां योग्यम् उत्तरं दातुं प्रयतन्ताम् –

१. स्वातन्त्र्योत्तरप्रथममूल्याङ्के किम् आसीत् ?
२. स्वातन्त्र्योत्तरं प्रकाशिते मूल्याङ्के कस्य भावचित्रं प्रथमं प्रकाशितम् ?
३. २००१ तमवर्षस्य जनवरीमासे व्यवहारपथम् आनीते मूल्याङ्के कस्यचित् भावचित्रम् अस्ति । कः सः ?
४. भारते प्रथमपत्रालयमूल्याङ्कः कदा प्रकाशितः ?
५. भारते चित्रयुक्तमूल्याङ्कः ऐदम्प्राथम्येन कदा व्यवहारे आनीतः ? कस्मिन् अवसरे ?
६. विमानेन पत्रप्रेषणं भारतदेशेन एव कृतम् ऐदम्प्राथम्येन । कदा कुत्र तत् कृतम् ?
७. सङ्केतलेखनसमये पत्रालयसङ्ख्यां (पिन् कोड्) लिखामः । तस्य पदस्य विस्तृतार्थः कः ? कदा भारते एतत् परिचायितम् ?
८. पिन्-कोड्-आधारेण भारतं कतिधा विभक्तम् ?
९. भारते अनेकाः प्रादेशिकपत्राचारव्यवस्थाः आसन् । एतेषां स्थगानं ब्रिटिश्शासकेन कदा कृतम् ?
१०. भारतीयमूल्याङ्केषु कस्य मौल्यम् अधिकम् ? किमर्थम् ?
११. बहवः देशाः कस्यचित् भारतीयनायकस्य चित्रस्य मूल्याङ्कं गौरवादरेण प्रकाशितवन्तः सन्ति । कः सः नायकः ?
१२. राष्ट्रियमूल्याङ्कसङ्ग्रहालयः कुत्र अस्ति ?

*(उत्तराणि अग्रिमे मासे)*

### मार्चप्रश्नावल्याः उत्तराणि

१. मेवाडस्य राजकुमारी मीरा ।
२. भक्तः सूरदासः ।
३. १५-१६ शतके स्थितः चैतन्यमहाप्रभुः ।
४. द्वारकायाम्, ज्योतिर्मठे, काञ्च्याम्, पुर्याम्, शृङ्गगिरौ च ।
५. अवैय्यार् ।
६. १५-१६ शतकयोः स्थितः कबीरः । सः स्वस्य बहुषु गीतेषु "देवः एकः एव । तं वयम् अल्ला इति, राम इति वा पूजयामः" इति वदति ।
७. शिरडी साइबाबा ।
८. रामानुजाचार्यः ।




# चित्रशीर्षिकास्पर्धा







**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'मार्च्'मासीयस्पर्धाशीर्षिकाप्रेषकः-

**श्री पि.वि.दिवाकरन्**

वारियम्, अविट्टातूरु - ६८० ६८३ (त.ना.)

**पुरस्कृतशीर्षिका**





**धनुर्विद्यां ज्ञास्यामि ।**
**धनुरासनं करोमि ।**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED. For details address your enquires to:
New 82 (old 92), Defence Officers Colony, Ekkatuthangal, Chennai - 600 097.







# सारे स्कूल को एक उंगली पर नचाओ !!

डरावने फिंगर प्रैंकीज़ !




ऑफर केवल रसना सॉफ्ट ड्रिंक कॉन्सन्ट्रेट के 32 ग्लास पैक पर.
ऑफर स्टॉक रहने तक.
पैक्स इस ऑफर के बिना भी उपलब्ध.






For more Pranky fun visit: www.gogokid.com

Mudra:RASNA:366/CHN/Hir.

